यथा—

'सुचिरमयमविद्यादुर्विलासेन्द्रजालैः
पशुरिव मृगतृष्णावारिपूरैर्विकृष्टः ।
विलुठति खलु जीवो विस्मृतस्वीयभूमा
कथमसि शिवभक्ते वत्सला त्वं पराची' ॥१९॥

इति । तदनु—

'भूतं भावि भवद्विमृश्य सकलं जीवस्य दुःखं चिरा—
दस्योत्तारणकारिणः कति वतोपायास्त्वयोद्भाविताः ।

---

इति श्रुत्या चावगतत्वात् । तथा च करिष्यमाणजीवराजविद्यापरिणयमहोत्सवस्य शिवभक्तिर्मुख्यकारणमिति सैवात्र नाटके मुख्यघटकत्वेन गृहीतेति ध्येयम् । **कारुणिकयेति** । करुणाप्रयोजनमित्यर्थे 'प्रयोजनम्' इति सूत्रेण ठक् । टिड्ढाणञ्' इत्यादिना ङीप् ।

**सुचिरमिति** । 'अविद्यातच्चितोर्योगः षडस्माकमनादयः' इत्यविद्याया अनादित्वादिति भावः । अत्र अयम् इति बुद्धिसंनिहितो जीवराजो गृह्यते । अविद्या दुर्विलासा एव इन्द्रजालानि वस्तुस्वरूपावरणेनान्यायान्यथा बोधकत्वात् । **पशुरिवेति** । अतिमुग्धत्वात् पशुः मृगतृष्णिकायां वारिपूराध्यासात् परिभ्राम्यतीति प्रसिद्धम् ॥ **स्वीयभूमेति** । यद्यपि भूमेति बहुत्वमर्थः । 'बहोर्लोपो भू च बहोः' इति बहुशब्दात् भावार्थे इमनिच्प्रत्ययस्य प्रकृतेभू' इत्यादेशस्य च विधानात् । तथापि लक्षणया सकलप्रपञ्चाधिष्ठानपरमात्मपरो भूमशब्द इति व्युत्पादितम् 'भूमा च संप्रसादादध्युपदेशात्' इत्यधिकरणे । तत्र हि भूमात्वेव विजिज्ञासितव्य इत्यत्र भूमा प्राणः परमेश्वरो वेति संशये प्राण इति पूर्वः पक्षः । भूमा परमेश्वरः संप्रसादात् प्राणात् अधि ऊर्ध्वमुपदेशात् । 'एष तु वा अतिवदति' इति तुशब्देन प्राणातिवादिनं प्रतिक्षिप्य तदनन्तरमाम्नानात् भूमा परमेश्वर एवेत्युक्तम् । **वत्सलेति** । करुणाशालिनीत्यर्थः । 'वत्सांसभ्याकामवल' इतिवत् सशब्दात् कामार्थवृत्तेर्लच्प्रत्ययविधानात् । पराची पराङ्मुखीत्यर्थः । उगितश्चेति ङीप् ॥१९॥

इष्टापूर्तपुरोगमाः सनिगमा मन्त्राः सतन्त्रा इमे
सन्त्येवं जगदम्ब मद्विरहितं हीयेत किं साधनम्' ॥२०॥

किं च

'नामैव नालमिह किं युवयोर्जनस्य
संसारघोरविषसागरतारणाय ।

---

उपायानेवाह—**इष्टेति** । इष्टं यागः, पूर्तं तटाकारामादि । निगमाः वेदाः । कर्मप्रमाणभूतवेदैस्सहेति यावत् । मन्त्राः पुराणेतिहासमन्त्रशास्त्रादिप्रसिद्धाः । तन्त्राणि पाञ्चरात्रपाशुपतादीनि । तैस्सहेत्यर्थः । नन्वत्र **उद्भाविता इति** निगमशब्दोक्तानां काठकादिग्रन्थविशेषरूपाणां वेदानामपि सुष्ठुत्वमुक्तम् । तदयुक्तम् । 'वाचा विरूपनित्यया' इति श्रुत्या स एवायं गकार इत्याद्यभेदप्रत्यभिज्ञया च शब्दमात्रस्य नित्यत्वावगमादिति चेत्-उच्यते-महतो भूतस्य'निःश्वसितमेतदृग्वेदो यजुर्वेदः सामवेदः प्रजापतिर्वा इमान्स्त्रीन्वेदानसृजत' इत्यादिश्रुतिभिः परमेश्वरस्य सर्वज्ञकल्पसकलवेदकारणत्वस्य 'शास्त्रयोनित्वात्' इत्यधिकरणे वर्णकान्तरेण समर्थितत्वात् । अस्मिन्पक्षे सूत्रस्य शास्त्रस्य ऋग्वेदादिरूपस्य योनित्वात् कारणत्वादित्यर्थः प्रत्यभिज्ञायाश्च 'उत्पन्नो गकारो' 'विनष्टो गकार' इत्याद्यनुभवबाधितत्वात् नित्यत्वश्रुतेश्च स्तुतिपरत्वात् न कोऽपि दोषः ।।२१''

**नामैवेति** । 'अपि वा यश्चण्डालः शिव इति वाचं वदेत् तेन सह संवसेत् तेन सह संवदेत् तेन सह भुञ्जीत' 'यद्व्यक्षरं नाम गिरेरितं नृणां सकृद् प्रसङ्गादयमाशु हन्ति तत्' ।

इत्यादिश्रुतिभागवतादिवचनैः, शिवरहस्ये शिवनामानि प्रस्तुत्य

'नाम्नामेषां पशुपतेरेकमेवापवर्गदम् ।
महादेव महादेव महादेवेत्ययं ध्वनिः ॥
सुधियो मुक्तिकान्तायाः पाणिग्रहणडिण्डिसः । '

प्रायोभवन्ममतया कलितः स एष
लोकेषु मामपि पदार्थयितुं प्रयत्नः' ।।२१।।

इति मया सविनयमभिहिते भगवति सस्मितमवोचत—

'वत्से मैवं वादीः ।

'कर्माणि सन्तु विविधानि करोतु तानि
क्लिष्टश्चिरेण तपसा नियमैश्च घोरैः ।
त्वत्संनिधानविरहे तु भवन्ति तानि
पाञ्चालिकाभिनयवत्फलवञ्चितानि ।।२२।।

---

इत्यादिभिः शिवनाम्नः सकृदमनस्कसंगीतेनापि सकलपातकनिवर्तन-द्वारा मुक्तिप्रदत्वावगमादित्यर्थः । भवतोर्ममतयाऽभिमानेन पदार्थयितुं पदार्थं कर्तुम् । 'तत्करोती' ति णिचि तुमुन् ।।२१।।

**कर्माणीति** । नित्यनैमित्तिककाम्यरूपाणीत्यर्थः । तपः कृच्छ्रचान्द्रा-यणादिनियमैर्वागादीन्द्रियाणां त्वत्सन्निधानसामानाधिकरण्येन पाञ्चालिकाया दारुशिलानिर्मितप्रतिकृतेः सूत्रधारप्रवर्तितः लाभादि लाभोपभोगादिफलरहितः एवं शिवभक्तिं विना कृतान्यपि कर्माणि निष्फलानीत्यर्थः । शिवभक्ति-विहीनस्य च कर्मणा फलशून्यत्वं दक्षाध्वरादौ पुराणेषु प्रसिद्धम् । शिव-रहस्येऽपि—

'क्रियादक्षो दक्षः क्रतुपतिरधीशस्तनुभृता-
मृषीणामार्त्विज्यं शरणदसदस्याः सुरगणाः ।
क्रतुभ्रंषस्त्वत्तः क्रतुषु फलदानव्यसनिनः
ध्रुवं कर्तुः श्रद्धा विधुरमभिचाराय हि मखः ॥'

इति ।।२२।।

तदिदानीम्—

जनिप्रभृतिपक्वणे शबरताविमूढो यथा
विनीय नृपनन्दनो नृपतिकन्यया योज्यते ।
तथैनमितरभ्रमाकुलमितो महादुर्ग्रहा—
द्विमोच्य निजविद्यया घटयितुं यतेथा' इति ।।२३।।

*(विचिन्त्य)* ननु तदैव परमेश्वर्याऽभिहितम् —'अत्र तव सहकृत्वरी निवृत्तिरनुपदमेव मया प्रेष्यत' इति । तत्किमद्यापि निवृत्तिःचिरयति ।

---

**जनिप्रभृतीति** । जननमारभ्येत्यर्थः । **पक्वणेति** । 'पक्वणः शबरालय' इत्यमरः । शबरता स्वात्मन्यध्यस्ता । तया विमूढः विस्मृतस्वीयराजभावः नृपनन्दनः न त्वशम्बरः किन्तु महाराज इति बोधनेन यथा राजकन्यया संगच्छते तथा जीवराजं नाहमीश्वर इति भेदभ्रमाकुलम् । यद्वा इतरो नीचोऽहमिति भ्रमः । 'इतरस्त्वन्यनीचयोः' इत्यमरः । महादुर्ग्रहात् महतः ब्रह्मादिभिरप्यलङ्घनीयत्वात् दुर्ग्रहात् उक्तरूपेतरभ्रमात् । एवं न त्वं परमेश्वरादन्यः नीचो वा, किन्तु 'तत्त्वमसि' इत्यादिभिः-ब्रह्मनिष्ठोपदेशैर्महा-संघटात् संसारात् विमोच्य शिवोऽहमिति ज्ञानरूपया विद्यया घटयितु-मित्यर्थः । यद्यपि दुर्ग्रहशब्दोपात्तभ्रमलक्षिता विद्या विमोकस्य विद्या-साध्यत्वेन तत्पश्चाद्भावित्वात् विमोच्य निजविद्यया घटयितुमित्यनुपपन्नम् । **विमोच्येति** ल्यपा विमोकस्य पूर्वकालत्वावगमात् तथाप्यविद्यानिवृत्ति-रतिरिक्तेति पक्षे तथात्वेऽपि अधिष्ठानब्रह्मस्वरूपेति पक्षे ज्ञानविद्यानिवृत्त्योः समकालत्वसंभवात् 'व्यादाय स्वपिति' इत्यादाविव कथंचित् ल्यपः प्रयोग-संभवात् न दोषः । न चैवं ब्रह्मस्वरूपस्य नित्यत्वात् विद्यासाध्यत्वं न संभव-तीति वाच्यमित्यस्यापि क्षेमसाधारणसाध्यत्वे बाधकाभावादित्यन्यत्र विस्त-राण्यर्थस्य पूर्वकालत्वसंभवात् न दोषः ।।२३।।

**विचिन्त्येति** । अनेन शिवभक्तेर्विद्याघटनौत्सुक्यसूचनात् 'औत्सुक्य-मात्रमारम्भः फलमादाय भूयस' इत्युक्तलक्षण आरम्भाख्यो वस्तुनोऽवस्था-विशेषः सूचितः । तेनायं मुखसन्धिः । सन्धिर्नाम—

( पुरो विलोक्य । सपरितोषम् । )

भस्मालेपनतः शरज्जलधरच्छायां तनुं बिभ्रती
पद्मभ्यामधरश्रिया च कथमप्युन्नेयवक्त्राम्बुजा ।
वैयाघ्रं परिधाय चर्म दधती संव्यानमैणीं त्वचं
विद्युत्पिङ्गजटाच्छटा विजयते सेयं निवृत्तिः पुरः ॥२४॥

---

'एककार्यान्वयजुषां वस्त्वंशानामनन्तरे ।
फलेऽन्वितानां सन्धानं सन्धिरित्यभिधीयते ॥'

इति बोध्यम् ।

'अर्थप्रकृतयः पञ्च पञ्चावस्थसमन्विताः ।
यथासंख्येन जायन्ते मुखाद्याः पञ्चसन्धयः ॥'

इति सन्धिविशेषलक्षणम् ।

तथा च बीजारम्भयोः सन्धानं मुख सन्धिरिति ज्ञेयम् । अर्थप्रकृतयः अर्थस्य काव्यशरीरस्य प्रकृतयः कारणानि अवयवभूता अवस्था कार्यस्य घटकव्यापारापेक्षया ज्ञेयाः । अवस्थाः पञ्च कार्यस्य प्रारब्धस्य फलार्थिभिः । इति वचनादिति वचनार्थः । अस्य च मुखसन्धेः—

'उपक्षेपः परिकरः परिन्यासो विलोभनम् ।
युक्तिः प्राप्तिः समाधानं विधानं परिभावना ॥
उद्भेदकरणं भेदा अन्वर्थानि यथाक्रमम् ॥'

इति द्वादशाङ्गानि । तानि च यथासंभवं तत्र तत्र प्रदर्शयिष्यन्ते । तत्रोपक्षेपः शिवभक्त्युयत्साहरूपबीजम् ।

'न्यासः परिकरो बीजस्याभिव्यक्तिर्द्वयमपि' । मुदितेति ध्रुवया धृतोत्साहा भवामि' इति तदनन्तरं शिवभक्तिवचनेन दर्शितौ ।

'बीजन्यास उपक्षेपो व्यक्तिः परिकरोऽस्य तु' इति तयोर्लक्षणे । तदेव मत्प्रेषणसमय एव सहकृत्वरीति सहशब्द उपपदे सहे चेति कृञः क्वरपि 'टिड्ढाणञी' ति ङीप् । **चिरयतीति** । चिरमिति मान्ताव्ययेन दीर्घकाल उच्यते । 'ततस्तत्करोती' ति णिचीष्ठवद्भावेन टिलोपे गुणायादेशयोश्चिरयतीति रूपम् । अनेन 'असूचितस्य पात्रस्य प्रवेशो निर्गमोऽपि वा' इति प्रमाणानुसारेण प्रवेक्ष्यमाणा निवृत्तिः सूचिता । **सपरितोषमिति** । चिन्तासमकालमागमनस्य इत्याश्चर्यसंभूतेन सन्तोषेण सहेत्यर्थः ।

(ततः प्रविशति निवृत्तिः)

**निवृत्तिः**—अम्ब शिवभक्ते, प्रणमामि ।

**शिवभक्तिः**—वत्से, प्रकाशतां ते परं ज्योतिः ।

**निवृत्तिः**—भगवति, संदिष्टास्मि परमेश्वर्या—'वत्से महति कार्यविशेषे मया नियुक्तायाः शिवभक्तेरभिहितकरणाय प्रत्यनन्तरीभव' इति । तदद्य को नियोगो भगवत्याः ।

**शिवभक्तिः**—वत्से निवृत्ते, कथंचिदस्य जीवराजस्य सुमहतः संकटाद्विमोचने विद्यासंयोजने च विधेयो यत्नः ।

**निवृत्तिः**—किमेतावदस्य समापतितम् ।

**शिवभक्तिः**—किमितोऽपि समापतितव्यं देवस्य । शृणु तावत्,

---

**क्षरदिति** । शारदजलधरधवलामित्यर्थः । **पक्ष्मभ्यामिति** । यद्यपि 'पक्ष्माक्षिलोम्नि किंजल्क' इति कोशकारवचनात् लोचनप्रान्तलोमवचनः पक्ष्मशब्दः । तेषां च बहुत्वात् द्विवचनमनुपपन्नम् । अत एव 'स्थिताः क्षणं पक्ष्मसु ताडिताधरा' इति कुमारसंभवे प्रयोगः । तथाप्येकैकनेत्रगतपक्ष्मपंक्तिमेकीकृत्य द्विवचनमिति ध्येयम् । **अधरश्रियेति** । अणुत्वादधरश्रिय इति भावः । तथा च इदं मुखं पक्ष्मलत्वात् अरुणाधरत्वादित्यनुमानगम्यवक्त्राम्बुजेत्यर्थः । **वैयाघ्रमिति** । व्याघ्रशब्दात् तस्य विकार इत्यर्थेऽञि 'न य्वाभ्याम्' इत्यजागमः परिधाय अन्तरीयं कृत्वा । **ऐणीमिति** । एणशब्दादण् विकारार्थे 'एण्या ढञ्' इत्यत्र स्त्रीलिङ्गनिर्देशेन लिङ्गविशिष्टपरिभाषायाः प्रवृत्त्यभावात् न ढञ् । प्रायेण निवृत्तानां निःस्पृहत्वात् तपश्शीलत्वाच्च वैखानसोचितचर्मधारणमुपवर्णितम् । तपस्विनो हि महर्षयः पुराणेतिहासादिषु तथा बहुधा वर्णिताः अत एव जटावर्णनमपि युक्तम् ।।२४।।

**प्रत्यनन्तरीभवेति** । अभूततद्भावे च्विप्रत्ययः । समीपे तिष्ठेत्यर्थः ।

**कथंचित्** । केनाप्युपायेन ।

व्यामोहादसतीविलासजनितादासादितो लाघवं
निश्शङ्कं परितो बलादविरतं कामादिभिः कर्षणात् ।
हृष्यञ्जातु रुदन्क्षणेन विहसन् भूयो विषीदन्मना-
गित्थं हन्त परः पुमान् स महतीं नीचां दशामश्नुते ॥२५॥

---

**व्यामोहादिति** । अविवेकादित्यर्थः । असति सद्रूपात् ब्रह्मणः पृथग्भूता अविद्येति यावत् । 'सद्भिन्नत्वमेवानिर्वचनीयत्वम्' इति विवरणादिषु प्रपञ्चितम् । लाघवम् कूटस्थोऽपि अतितुच्छैः कामादिभिः कर्षणयोग्यत्वरूपं लाघवमित्यर्थः । **कष्टं हन्तेति** खेदार्थे पदद्वयम् । 'कष्टं हन्त मृगीदृशाम्' इति वचनात् । नीचाम् कुत्सिताम् । दशाम् अवस्थाम् । अत्र प्रस्तुते जीवराजवृत्तान्ते वर्ण्यमाने तत्सरूपस्याप्रस्तुतस्य प्राक् महाश्रोत्रियवृत्ति पश्चान्निरन्तरपरदारनिरतसकललोकपरिहास्य पुरुषवृत्तान्तस्यापि प्रतीतेः समासोक्तिरलङ्कारः ।

'समासोक्तिः परिस्फूर्तिः प्रस्तुतेऽप्रस्तुतस्य यत् ।
अयमैन्द्रीमुखं पश्य रक्तश्चुम्बति चन्द्रमाः ॥'

इति लक्षणोदाहरणे ॥२५॥

**व्यामुग्ध इति** । तरुगुल्मघास इत्येवं प्रकारैः बहुजन्मभिः कति खेदान् न प्रापितः । 'त इह व्रीहियवा ओषधिवनस्पतयस्तिलमाषा इति जायत' इति श्रुतेः । भूयः पुनः । कीटादिभिर्भावैः क्लेशितः संजातक्लेशः । 'अथैतयोः पथोर्न कतरेण च तानीमानि क्षुद्राण्यसकृदावर्तीनि भूतानि भवन्ति । जायस्व म्रियस्वेत्येतत्तृतीयं स्थानम् । तेनासौ लोको न संपूर्यता' इति श्रुतेः । दिष्ट्या दैवात् । विधया प्रकारेणोपलक्षितः । अत एव पारं स्पृशन् वर्तत इत्यर्थः । मानुष्यं तत्रापि पुंस्त्वब्राह्मण्यवेदाभ्यासपूर्वोत्तरमीमांसापरिश्रमादिः आदिशब्दार्थः । 'अथ य इह कपूयचरणा' इत्यारभ्य 'श्वयोनिं वा सूकरयोनिं वा' चण्डालयोनिं वा इत्युक्त्वा 'अथ य इह रमणीयचरणा' इत्यारभ्य

**निवृत्तिः**—(*सखेदम्*) आश्चर्यमिदम् । अप्रधृष्यस्य महात्मनो देवस्य दुस्सङ्गदोषेण कियती विपत्तिरुदपद्यत ।

**शिवभक्तिः**- किमेतावदेव । श्रूयतामग्रेऽपि ।

**निवृत्तिः** – भगवति, परास्पर्शनमस्य किं नाम ।

**शिवभक्तिः**—शृणु तावत् ।

व्यामुग्धस्तरुगुल्मघासजननैः खेदान् कति प्रापितो
भूयः कीटपतङ्गपन्नगमृगीभावैः कियत् क्लेशितः ।
दिष्ट्या मानुषपौरुषादिविधया पारं स्पृशन् वर्तते
भूयो नीचपथे पतेद्यदि कथं देवी तितिक्षेत तत् ॥२६॥
शश्वत्सिन्धुतरङ्गवद्बहुजनुः संपन्नधर्मोच्चयै—
र्वर्णस्स्वर्णवदस्य भाति बहुधा संस्कारसंयोगतः ।

---

'ब्राह्मणयोनिं वा क्षत्रिययोनिं वा वैश्ययोनिं वा' इति च श्रुतिः । **नीचपथ इति** । उक्तविधया पारस्पर्शप्रसक्तोऽपि यदि पुनः कपूययोनिं तृतीयं स्थानं वाऽऽपद्येत तत्कथं सा परमकारुणिकी सहेतेत्यर्थः ॥२६॥

**तरङ्गवदिति** । तरङ्गैस्तुल्यमित्यर्थे 'तेन तुल्यम्' इति वतिः । **जनुः** जन्म । जनुर्जननजन्मानीत्यर्थः **संस्कारैरिति** ।

अस्य इत्युक्तं जीवराजपक्षे 'पुंसवनादयः चत्वारिंशत्संस्काराः । स्वर्णपक्षे तु संस्कारः पुटपाकः । तथा च निष्टप्राप्ताष्टापदवदिति निर्मलोऽयमधुनेति भावः । **अष्टाविति** । 'दया सर्वभूतेषु क्षान्तिरनसूया शौचमनायासो मङ्गलमकार्पण्यमस्पृहा' इति गौतमोक्ता इत्यर्थः । **मैत्र्यादीति** । मैत्री करुणा मुदितोपेक्षाणां सुखदुःखपुण्यापुण्यविषयाणां 'भावनातः चित्तप्रसादनम्' इति योगशास्त्रप्रसिद्धमैत्र्यादिगुणभूषिता इत्यर्थः । **नेदिष्ट इति** संनिहिततम इत्यर्थः । 'अन्तिकबाढयोर्नेदसाधौ' इति अन्तिकशब्दस्य इष्टे यसोः परतो नेदादेशविधानात् । अत एव 'नेदिष्टमन्तिकतमम्' इति निघण्टुः । **कैवल्येति** । यस्य तु खलु 'संस्काराणामेकदेशोऽप्यष्टावात्मगुणाः । अथ स ब्रह्मणः सायुज्यं

अष्टावात्मगुणाश्च संनिदधते मैत्र्यादिभिर्भूपिता
नेदिष्ठो नरसिंह एष महितः कैवल्यलक्ष्म्या न किम् ॥२७॥

इदमेव तत्। अतोऽयमेवावसरः प्रयत्नस्य। परमेश्वर्याऽपि तदिदमभिसन्धायैव संप्रति वयमत्र सत्वरं नियोजिताः।

**निवृत्तिः**—भगवति, जीवराजस्य तादृगविद्याविघटनविद्या-संघटनविषये परमेश्वर्याः किंनिबन्धनोऽयमियानभिनिवेशः।

**शिवभक्तिः**—वत्से, जीवो नाम किमितरः परमेश्वराभ्याम्। शृणु, तर्हि कथयामि ते भूतार्थम्।

सत्यज्ञानसुखस्वरूपमहितः सर्वान्तरात्मेति यो
विख्यातः पुरुषः स तावदसतीं पश्यन्नविद्यामिमाम्।
अस्या विभ्रममोहितः प्रसुपितस्वीयप्रभावप्रथां
जीवो जीव इति प्रपद्य सुचिरादुन्मत्तवद्भ्राम्यति ॥२८॥

---

सालोक्यं च गच्छति' इति गौतमसूत्रे प्रागुक्तम्। तावत्संस्कारेषु कतिपय-संपत्तावपि गुणाष्टकसंपत्त्या ब्रह्मसायुज्यरूपकैवल्यकथने दण्डापूपिकान्यायेन तावत्संस्कारसमये कैवल्यमवश्यं सिध्यतीति भावः ॥२७॥

**इदमेवेति**। कैवल्यलक्ष्मीनेदिष्टत्वमित्यर्थः। तत्पारस्पर्शनं जीवो नामेति विद्यानाम इत्यपि द्रष्टव्यम्। एवं च 'सत्यज्ञाने' ति श्लोके जीव-परमेश्वराभेदमात्रोपपादनेऽपि न विरोधः।

**इतर इति**। इतरेत्यपि द्रष्टव्यम्। **भूतार्थमिति**। वेदान्तशास्त्रप्रसिद्ध-मित्थमित्यर्थः।

तथा च विद्याजीवयोः परमेश्वराभ्यामभेदमुपपादयितुं प्रथमं परमेश्वरस्य सर्वाभेदोपपादकमद्वितीयत्वं जीवाभेदप्रदर्शनव्याजेनाह—**सत्येति**। यद्वा विद्याजीवयोः शिवशक्तिभ्यामभेदं प्रतिज्ञाय प्रथमं जीवाभेदमुपपादयति—**सत्येति**। अत्राद्यपक्षे 'विद्या नाम' इति श्लोकेन चतुर्णामभेदे वक्तव्ये विद्या-

कि च—

विद्या नाम परा न सापि परमा चिच्छक्तिरेवात्मनः
सास्मिन्नीदृशि गर्हयैव विमुखी स्वेनात्मना वर्तते ।
यौ मातापितरौ समस्तजगतामाद्यौ शिवौ तौ च तौ
रूपं नाम च भिद्यतेऽथ समयेष्वेते मिथो नेतरे ॥२९॥

तथा च परमेश्वरी स्वजनकसंकटविषये कथमुदासीत ।

---

जीवयोः पूर्वार्धेनाभेदमुपपाद्य उत्तरार्धे तयोः शिवाभ्यामभेदः । द्वितीयपक्षे तु सत्यज्ञानश्लोकेन जीवाभेदमुपपाद्य 'विद्या नाम' इत्यर्धेन विद्याचिच्छक्त्योरभेदमुक्त्वा अर्थान्तरेण चतुर्णामभेदमुपसंहृत इति विवेकः । **भूतार्थमिति** । वेदान्तशास्त्रप्रसिद्धमित्थमित्यर्थः । **सर्वान्तरात्मेति** । सर्वेषामन्तः गुहाशब्दिते बुद्धितत्त्वे विद्यमाना आऽऽत्मेत्यर्थः । 'सत्यं ज्ञानमनन्तं ब्रह्म' 'यो वेद निहितं गुहायाम् परमे व्योमन्' 'एको देवः सर्वभूतेषु गूढः सर्वव्यापी सर्वभूतान्तरात्मा' 'रूपं रूपं प्रतिरूपो वहिश्च' 'अङ्गुष्ठमात्रः 'पुरुषोऽन्तरात्मा सदा जनानां हृदये संनिविष्ट' इत्यादिश्रुतेः । पुरुषप' इति परमेश्वरं प्रस्तुत्य 'स यत्पूर्वोऽस्मात् सर्वस्मात् सर्वान्यांमन औषत्, तस्मात् पुरुष' इति बृहदारण्यके । तस्मिन् पुरुषशब्दनिर्वचनात् 'ऋतं सत्यं परं ब्रह्म पुरुषं कृष्णपिङ्गलम्' इति तैत्तिरीयोपनिषदि, अङ्गुष्ठमात्रः पुरुषो ज्योतिरिवाधूमकः । ईशानो भूतभव्यस्य स एवाद्य स ईश्वर' इति कठवल्लीषु च परमेश्वरे षुरुषशब्दप्रयोगात् 'पुरुषावात्ममानसौ' इति नैघण्टुकवचनादात्मसामान्यपरोऽपि प्रकरणादिवशात्परमेश्वरपरः । कठवल्लीषु पुरुषशव्दो यद्यप्यङ्गुष्ठमात्रशब्दसामानाधिकरण्यात् जीवपरः प्रतीयते । देशकालवस्तुकृतपरिच्छेदशून्यत्वेनानन्तस्य परमेश्वरस्याङ्गुष्ठमात्रत्वासंभवात् । तथापि 'शब्दादेव प्रमित' इत्यधिकरणेऽङ्गुष्ठप्रमितः परमात्माशप्दात् 'ईशानो भूतभव्यस्य' इति परमेश्वराभिधानश्रुतिरूपादीशानशब्दादिति व्यवस्थापनात् तत्सामानाधिकरण्यं न बाधकम् । **विभ्रमेति** । विभ्रमैः विलासैः । **आत्म**

**निवृत्तिः**—उपपन्नमेवैतत् । तदेवं प्रकृतस्य कार्यस्य निर्वर्तने का पुनरितिकर्तव्यता । तदत्र निपुणतरमेकमुपायमवधारयतु भगवती ।

**शिवभक्तिः**—(*आत्मगतम्*) अतिचिरादविद्यासंसाररसैकलम्पटस्य जीवराजस्य विषयदोषोद्भावनादिभिरभिमुखीकरणमतिनिम्नगामिनो महतः प्रवाहस्य प्रतीपनमिव दुर्घटमेव । परं तु वासनागुणतया किंचिदपूर्वरमणीमणिपरिणयनप्रणाडिकयैव विद्यासंघटनमुपपादनीयम् । (*प्रकाशम्*) आः, चिन्तितो मया तदभिमुखीकरणोपायः ।

**निवृत्तिः**—कथमिव ।

**शिवभक्तिः**—(*कर्णे*) एवमिव ।

**निवृत्तिः**—साधु चिन्तितं भगवत्या ।

**शिवभक्तिः**—संप्रति हि जीवराजमविद्याविषयवासनाप्रवृत्तिभ्यां निरन्तरमुपरुध्य निश्शङ्कमकुतोभयमखिलेषु विषयेषु विजृम्भते । तदविलम्बितमभिमतसिद्धये व्याप्रियस्व । मयापि तत्तदुपसर्गविघटनाय प्रकृतकार्यघटनाय च तत्र तत्र व्याप्रियते । (इति निष्क्रान्ते ।)

*विष्कम्भः*

---

इति । जीवराजस्येत्यर्थः । तथा च चिच्छक्तिः परमेश्वरस्य विमलं चैतन्यमेवोच्यत इति प्रागेवोक्तम् । ननु विद्या नाम ज्ञानम् । तच्च 'श्रोतव्य' इत्यादिवाक्यैः श्रवणादिसाध्यमखण्डाकारान्तः करणावृत्तिरूपम् । तत्कथं केवलचिच्छक्तिर्विद्येति उच्यते । ज्ञानादिशब्दानां वृत्तिभ्यो बोधो बोधेभ्यो वा वृत्तिरर्थ इति 'विवरणादिषु' दर्शनात् तत्र च प्रधानत्वात् प्रकाशकत्वाच्च सैव विद्येति भावः प्रथा प्रसिद्धिः । तदाकारं दर्शयति-**जीवो जीव इति** ।।२८।।

(ततः प्रविशति चित्तशर्मणा नर्मसचिवेन सपरिवारया चाविद्यया जीवराजः ।)

**जीवराजः**—(देवींप्रति ।) प्रिये, नवनवोल्लासरमणीयैर्भवद्भिरतिचमत्कारैरति हि नाम प्रीणितो ममायं अन्तरात्मा।

**का पुष्णातु पुमांसमेवमपरा संकल्पलेशोद्भवं**
**नानाकारसमस्तभोग्यभरिता दैनन्दिनैरुत्सवैः ।**
**भूतं भावि च वा क्वापि किमिदं यद्धि त्वयोद्भाव्यते**
**नैषा दृष्टचरी न वा श्रुतचरी त्वच्चातुरीवैखरी ।३०॥**

---

**वर्तत इति**। तथा च स्वस्मिन्नेव वर्तते न जीवराजं कटाक्षेणापि वीक्षत इत्यर्थः। **मातापितराविति** ‘आनङ् ऋतो द्वन्द्वे’ इत्यानङ्। पित्रा मात्रेत्येकशेषस्तु वैकल्पिकः। शिवयोः शक्तिशक्तिमतोः समस्तजगत्कारणत्वादित्यर्थः। द्वितीयं तौ इति पदं जीवराजविद्यापरम्। **रूपमिति**।

‘अप्राकृतशरीरं तमतिमन्मथरूपिणम् ।
घृतरीतिघनीभूतसच्चिदानन्दविग्रहम् ।
तस्या साधारणा मूर्तिः साम्बा चन्द्रार्धशेखरा ।
नीलग्रीवा परानन्द प्रमोदात् ताण्डवप्रिया ॥
ब्रह्मविष्णुमहेशानैरुपास्या गुणमूर्तिभिः ॥’

इति।

‘अमूर्तं यत्परं ब्रह्म सादरं श्रुतिचोदितम् ।
तस्येदमैश्वरं रूपं खण्डचन्द्रावतंसकम् ॥
तमालश्यामलगलं लसत्फालविलोचनम् ॥’

इति चैवमादिशिवपुराणोक्तानि रूपाणि परमेश्वरस्य ‘सत् ब्रह्म शिवो महेश्वर’ इत्यादीनि नामानि। जीवस्य तु प्रसिद्धो नामरूपभेदः। विद्या ज्ञानमित्यादि वृत्त्युपहितचैतन्यमिति। विद्याया उमा हैमवती शक्तिः।

‘तस्यां कमण्डलारूढा शक्तिरिच्छाह्वया शिवा ।
महालक्ष्मीरिति ख्याता श्यामा सर्वमनोहरा ॥’ इति

**चिच्छब्दयोरिति।** जीवादीनां नामरूपभेदः। तथा विद्वान्नामरूपे विहाय 'निरञ्जनः परमं साम्यमुपैति' तथा विद्वान्नामरूपाद्विमुक्तः 'परात्परं पुरुषमुपैति दिव्यम्' इति **श्रुतौ** ज्ञानकाले नामरूपपरित्यागवर्णनात् काल्पनिकानीत्यर्थः ॥२६॥

**इतिकर्तव्यतेति।** उपाय इत्यर्थः **भगवत्येति।**

'एषामपि स्त्रियो वाच्या भगवत्यादिभिः पदैः' इति परिभाषा।

**ब्यापृयत** इति। अनेन प्रस्तावना सूचिता। उत्साहरूपं बीजं पुनरुपक्षेपेण दृढ़ीकृतमिति। **निष्क्रान्ते** इति। इत्युक्तप्रकारेण प्रथमाङ्के करिष्यमाणं जीवराजविद्यासंघटनरूपमर्थं संक्षेपेणोपक्षिप्य **निर्गता** इत्यर्थः॥

एवं विष्कम्भं समाप्य तदुपक्षिप्तार्थप्रपञ्चनरूपं

'प्रत्यक्षनेतृचरितो बीजो बीजसमन्वितः।
प्रसक्तार्थोपसंहारी पताकास्थानकान्वितः॥
अङ्को नानाप्रकारार्थसंविधानरसाश्रयः।
एकाहे चैकरात्रे च चरितं तत्र वर्णयेत्॥
प्रयुक्तैः पञ्चषैः पात्रैः तेषामङ्के विनिर्गमः।
एवमङ्काः प्रकर्तव्याः प्रवेशादिसमन्विताः॥'

इत्युक्तलक्षणमङ्कं प्रस्तौति—**ततः** इति। **अभिरतीति।** रुचीत्यर्थः। रुच्यैश्चमत्कारैरिति यावत्। **प्रीणित** इति। अतिशयेन प्रीत्याश्रय इत्यर्थः।

**उद्भवमिति।** चिन्तितसमसमयसमुदञ्चितनानाप्रकारसकलभोगसामग्रीसमग्रेत्यर्थः। **उत्सवैरिति।** उत्सवप्रायैः प्रतिदिनं प्रवर्त्स्यमानैः व्यापारैरित्यर्थः। **कुहापि** कुत्रापीत्यर्थः। **उद्भाव्यत** इति। संप्रतीतिशेषः। यद्भूतमुद्भाव्यत यच्च भाव्यमुद्भावयिष्यत इदं सर्वं किमद्भुतमित्यर्थः। '**देवाह एतेति** सा वैश्वदेव्यामिक्षा' 'शैत्यं हि यत्सा प्रकृतिर्जलस्य' इतिवत्। **चातुरीवैखरीति।** निर्दिश्यमानविशेषापेक्षया स्त्रीत्वम्। **दृष्टचरीति।** भूतदर्शनगोचरो नेयमित्यर्थः। एवं श्रुतचरी भूतपूर्वे चरट्। 'टिड्ढाणञ्' इत्यादिना ङीप्। **वैखरीति।** यद्वा यत्त्वयोद्भाव्यते प्रतिदिनं इदं भूतं किं भावि किं नोभयमपि न कुत्रापीति भावः। एवं चैवंविधनिरतिशयव्यापार-

देवी—(*सप्रश्रयम्।*)

**यत्किंचित्प्रभवाम्यहं कृतिषु तत्सर्वं भवद्वैभवं**
**कर्तुं भर्तुमथापहर्तुमपि वा काहं वराकी जडा।**
**तत्सर्वं भवतो विभूतिकणिका यद्यन्मयोद्भावितं**
**मामेषोपगता किलेति ममतास्नेहादभिष्टौषि माम् ॥३१॥**

**प्रवृत्तिः**—अये भट्टिनि, स्तुतिरिति किमसदर्थोपन्यासः क्रियते। नन्वयं भवत्या।

---

क्षिप्तां चातुरीवैखरीं प्रशंसन्नुपसंहरति—**नैषेति**। अस्मिन् पक्षे एषेति बुद्धिसन्निहितचातुरी गृह्यते ॥३०॥

**सप्रश्रयम्** सविनयम्।

**यत्किंचिदिति**। समुदायोऽयं वीप्सान्यायेन साकल्यपरः। **यद्यदिति**। यावत् यत्किंचित् प्राचीनम् अग्नीषोमीयादित्यादौ तथा दर्शनादिति भावः। **कृतिषु** कार्येषु। कर्मणि क्तिन्। **वैभवं** सामर्थ्यम्। तदेव विशदयति—**कर्तुमिति**। **कर्तुम्** उत्पादयितुम्। **भर्तुम्** पोषयितुम्। **अपहर्तुम्** संहर्तुम्। **वराकी** शोच्या। **जडेति**। चेदनाधिष्ठानं विना न सामर्थ्यमिति भावः। एवं सामान्यतः स्तुत्वा संप्रति भूतं भावोत्याद्युक्तमपि भवद्विभूतिकणिकैवेत्याह—**तदिति। यद्यदिति**। यच्छब्दवीप्सायामपि तत्प्रतिनिर्देशकतच्छब्देन वीप्सानियमः। 'सा सा ह्रिया नम्रमुखी बभूव' इत्यादिषु दर्शनेऽपि 'यद्यत्पापं प्रति जहि जगन्नाथ नम्रस्य तन्मे' इत्यादिषु तदभावात्। उपगता आश्रिताः। ममतया यः स्नेहः तस्मादयम् अभिष्टौति। 'उपसर्गात्' इति षःष्टुत्वम् ॥३१।

**असदर्थेति**। सदर्थस्तुतिसंभवेऽपि प्रायेणासदर्थत्वस्य स्तुतिषु दर्शनादिति भावः।

**विभिन्नेति**। विभवः सामर्थ्यम्। **बुद्धिम्** कर्तव्यताबुद्धिम्। **समृद्ध्यंसलम्** संमृद्धि विशिष्टम्। **वैरिञ्चम्** विरिञ्चस्येदम्। 'तस्येदम्' इत्यण्।

दत्त्वा कर्मपथे विचित्रविभवे बुद्धिं स्वमृद्व्यंसलं
वैरिञ्चं पदमेतदैन्द्रमिदमित्युच्चैः पदं स्थापितः ।
स्वर्वामाधरमाधुरीषु मुदितः प्रेङ्खन्मणीमेखला—
जालोत्तालझलंझलादिसुभगान् भोगान् कति प्रापितः ॥३२॥

**देवी**—सखि प्रवृत्ते, भवत्या मयि प्रणयविजृम्भितमेवैतत् । वस्तुतस्तु भवदायत्तमेवेदम् । तथा हि ।

क्रीडा काञ्चनशैलकूटघटितप्रत्युप्तनानामणि-
ज्योतिः कर्बुरसौधसीमसु कनत्कल्पद्रुपुष्पास्तरे ।
उद्दामस्मरदर्पविभ्रमवती संभोगशृङ्गारिणो
यत्क्रीडन्ति विलासिनस्तदखिलं लीलायितं तेन किम् ॥३३॥

**चित्तशर्मा**—*(स्वगतम् ।)* हन्त । तदेवमासामन्योन्यप्रशंसा-भिनन्दनाभिनिचिवेशेन तन्मय इव जायते वयस्यः । तदयमेवावसरो विवेकादीनभिप्रतिश्रुतार्थोपक्षेपस्य तदेवमभिध्यास्ये । *(प्रकाशम्)* । अत्र तेन किमित्येव परिणतौ सर्वमिदं भवेत् ।

---

पदं स्थानम्, सत्यलोकः । इति शब्दः प्रकारार्थे । अनेन प्रकारेणोन्नतं पदं वैकुण्ठादिरूपं प्रापितस्सन् भोगान् कति प्रापित इति संबन्धः । भोगा विशिष्यन्ते । प्रेङ्खन्मणीमेखलाजालम् तस्य उत्तालः अधिकः झल-झलः मेखलाशिञ्जितानुकरणम्, तेन अ तसुभगान् अतिमनोहरान् । अत्र समृद्धि-मद्वस्तुवर्णनादुदात्तालङ्कारः ॥३२॥

क्रीडत्यादि घटितेत्यन्तम्, प्रत्युप्तेत्यादि कर्बुरेत्यन्तं च सौधस्य विशेषणद्वयम् । कनत्प्रकाशमानेत्यर्थः । 'कनी दीप्तौ' । ततः···शता उद्दामः अधिकः स्मरदर्पो यासामिति बहुव्रीहिः । तादृशविभ्रमवतीनां संभोगशृङ्गारः येषामस्तीति संभोगशृङ्गारिणः । 'अत इनि ठनौ' इति इनिः । यद्यपि 'न बहुव्रीहिगम्येऽर्थे भवन्ति न मतुबादय' इति निषेधः; तथाप्यानित्योऽयं निषेध-बिसकिसलयच्छेदपाथेयवन्तः', 'ज्योतिष्मतीलोचनेत्यादि प्रयोगात् ॥३३॥

**विषयवासना**--(*सामर्षम्*।) अये, निपुणः खलु भवानुचितोपचारैः स्वामिपादपरिचरणेषु। (*देवीं प्रति*।) 'तेन किम्' इत्यस्मदुद्भावितेषु नीरसत्वमापादयता राजहितैषिणामुना महामन्त्रिणा चित्तशर्मणा पूर्वेद्युः अधिनिशीथिनि विनोदव्याजेन देवपादविषये कश्चिन्महानुपचारः कृतः 'स्वधर्मः किलायमस्य' इति, तद्देवेन तितिक्षितम्।

---

**स्वगतमिति**। 'अश्राव्यं स्वगतं मतम्' इति लक्षणात्। **वयस्य इति**। राजा नर्मसचिवेन वयस्यशब्देन वक्तव्य इति परिभाषा। **तदयमिति**। अत्रेदं बोध्यम्। विष्कम्भे अविद्यावशंवदस्य जीवराजस्य विद्यापरिणयनं दुष्करम्। अतस्तद्विद्या नाम रमणी काचिदिति विषयतया तत्प्रदर्शनव्याजेनैव कर्तव्यम्। तदर्थं शमादिमुखेन चित्तशर्मभिदनेन वशीकर्तव्य इत्युपायकरणे शिवभक्त्या निवृत्तिं प्रति 'एवमिवेति' सामान्येनोक्तम्। विवेकादिभिश्च तथा कृतम्। ततश्चित्तशर्मणा विवेकादिसंनिधाववश्यं तथेत्यङ्गीकृतमिति तदेतदाह— **विवेकादीनभिप्रतिश्रुतार्थोपक्षेपस्येति**। अनेन प्रकृतकार्यारम्भनिबन्धनात् करणं प्रकृतारम्भ इत्युक्तम्। करणं नाम अङ्गं दर्शितम्। एतच्च तृतीयाङ्के स्फुटीभविष्यति। एवम् वक्ष्यमाणप्रकारेण। **प्रकाशमिति**। सर्वश्राव्यं प्रकाशं स्यात्' इति लक्षणम्। तेन किमित्येव इति लीलायितम्। तेन किमित श्लोके ते इति नेति च पदद्वयं कृत्वा इदं सर्वं तवलीलाप्रायं न किम् इत्यर्थमभिप्रेत्य पूर्वमुक्तम्। इदानीं तु तेनेति तृतीयान्तं कृत्वा तेन किं साध्यमिति बोधयन् वैदग्ध्येनाहेत्यर्थः। अधिनिशीथिनि रात्रौ विभक्त्यर्थेऽव्ययीभावः। तितिक्षितम् सोढम्।

शार्दूलादयः प्रसिद्धाः। 'तरक्षुस्तु मृगादन' इत्यमरः। **आत्मनेति**। 'इत्थंभूतलक्षणे' तृतीया।

**स्वप्नस्येति**। 'सन्ध्ये सृष्टिराह हि' इत्यधिकरणे 'अथ रथान् रथयोगान् पथः सृजते' इत्यादिषु श्रुता स्वप्नदृष्टिः किं परमेश्वरकर्तृका

**देवी**--तत्कथमिव ।

**विषयवासना**--

शार्दूलश्वशृगालमर्कटमहारक्षस्तरक्ष्वात्मना
घोरोद्घोषणमन्धकारिणि वने खादन्निवाभ्यागतः ।

**देवी**--स्वप्नस्य तदधीनतया तस्य सर्वोऽपि वेषः संगच्छत एव। ततस्ततः ।

**विषयवासना**--

तद्दृष्ट्वा भयतो विसंस्थुलपदं धावन्द्रुमान्पर्वता-
नारोहन्निपतन्निवाकुलतरो दिष्ट्या प्रबुद्धो विभुः ॥३४॥

**जीवः**--प्रिये, सत्यमेतत् । आकस्मिकतया बहुपर्याकुलोऽस्म्यनेन ।

**देवी**--(*सस्मितम्*।) उचितमेव कृतम् । भवितव्यं खलु तदेकीभावस्य फलभोगेन ।

**चित्तशर्मा**-- (*स्वगतम्*।) यथाकथंचिदयमभिभावनीय इति धूर्ताया विषयवासनाया हृदयम् । (*प्रकाशम्*।) अयि कश्मले, यदसाधु तदेव मम चेष्टितमुद्भावयसि, यदभिनन्दनम् । इदं तु प्रतिपादयसि । यत्किल,

---

आहोस्वित् जीवकर्तृका इति सन्देहे जीवं प्रस्तुत्य स्वप्नेषु 'कामं कामं पुरुषो निर्मिमाणः' स्वयं निहत्य स्वयं निर्मायेति' इति च श्रुतेः जीवकर्तृकैव इति व्यवस्थापनात् जीवस्य चान्तः करणप्रधानकत्वात् तदधीनत्वमिति भावः ।

**तदिति** । अभ्यागमनमित्यर्थः । भयतः आद्यादित्वात्तसिः । विसंस्थुलम् जर्जरम् पदं यस्मिन्निति क्रियाविशेषणम् । **आरोहन्नित** । पर्वतानारोहन् तेभ्यो निपतन् इव अत्यन्तमाकुल इत्यर्थः ॥३४॥

त्वङ्गत्तुङ्गतुरङ्गकोटि विनटन्माद्यत्पदाति क्वणद्-
घण्टाजालझणंझणद्द्वधतति क्षीवद्विपश्रेणि च ।
सृष्ट्वानेकपुरीः श्रिया सुरपुरीरेतास्वयं वैभवै-
रानीतो मणिमण्डपे ननु मया सिंहासनेऽध्यासितः ॥३५॥

**जीवः**—इदमप्यस्त्येव । तदेवमपूर्वार्थप्रपञ्चनविधावयमेव समर्थः ।

**प्रवृत्तिः**—आभासमात्रमिदमखिलमपि कस्मिन् कोणे वा भट्टिन्याः प्रभावमहिमातिशयस्य ।

---

**सस्मितमिति ।** वक्ष्यमाणस्य परिहासत्वं सूचितम् ॥

**अभिनन्दनमिति ।** 'अभिनन्दत्यनेन' इति करणे ल्युट् ॥

त्वङ्गत् वलगत् क्षीवत् माद्यत् **श्रियेति ।** त्वङ्गदित्यादि क्रियाविशेषण-चतुष्टयाभिहितरूपयेत्यर्थः । **एतास्विति ।** पुरीष्वित्यर्थः वैभवैः विलासैः सहेत्यर्थः । 'सहयुक्तेऽप्रधान' इति तृतीया । सहशब्दप्रयोगनियमस्तु नास्ति । 'वृद्धो यूने' ति लिङ्गात् । **अध्यासित इति ।** पुर्या धारकर्मणि मण्डपाधेये सिंहासने निवेशित इत्यर्थः । परम्पराधारेऽपि सप्तमी न विरुध्येत । 'वेद्यां हवींष्यासादयति' 'बर्हिषि हवींष्यासादयति' 'स तत्र मञ्चेषु मनोज्ञवेषान् सिंहासनस्थानुपचारवत्सु' इत्यादिवैदिकलौकिकप्रयोगेषु वेदिमञ्चादीनामिवेति भावः ॥३५॥

**तदेवपूर्वार्थेति ।** अनेनातिदुर्घटघटनापटीयस्त्वमेव समुद्घाटितं चित्तशर्मण इति वा संगतिः स्वप्नोपन्यासस्येति ध्येयम् ॥

उद्यानानि महावनानि गिरयः प्रासादसौधादयः
प्राकारस्तु सचक्रवालशिखरी खेयं तु सप्तार्णवी ।
आशास्तोरणगोपुराणि दश तास्तेजस्त्रयी दीपिका
यस्याः शिल्पमियं पुरी वसुमती सा केन वा वर्ण्यताम् ॥३६॥

**विषयवासना**—सखि प्रवृत्ते, किमल्पमेवोदाहृतम् । इत्थं कति जगन्ति जयन्ति, कति वारानमूनि गतानि, कति च वारानुत्पादितानि भट्टिन्या ।

**चित्तशर्मा**—(*सोटप्रासम् ।*) अये, सत्यम् । आभासमात्राण्येव मदारब्धानि । यतः प्रातिभासिकानि । युष्मदुद्भावितानि तु पारमार्थिकानि स्थिराणि सुखानि देवस्य ।

---

**महावनानीति** । विन्ध्याटवीप्रभृतीनि । गिरयः मेरुमन्दरादयः । प्रासादा देवताश्रयाः । सौधाः राजसदनानि । 'प्रासादो देवभूभुजाम्' 'सौधौ स्त्री राजसदनम्' इत्युभयत्राप्यमरः । आदि-शब्देन चन्द्रशालादि । स इति प्रसिद्ध इत्यर्थः । खेयम् परिघा । सप्तानामर्णवानां समाहारः सप्तार्णवी । 'संख्यापूर्वो द्विगुः' इति द्विगुसंज्ञायां 'द्विगोः' इति ङीप् । तोरणानि गोपुराणि चेति द्वन्द्वः । ता इति प्रसिद्धा इत्यर्थः । **तेजस्त्रयीति** । चन्द्राजलचण्डकरात्मिकेत्यर्थः । **यस्या इति** । तन्त्रावृत्त्यादिभिः अविद्यायां वसुमतीपुर्यामपि संबध्यते । **इयमिति** । उक्तरूपोद्यानप्रासादादियुक्तेत्यर्थः । एवंविधापीयं वसुमती पुरी यस्याः । शिल्पम् सामर्थ्यम् । शिल्पसाध्यत्वात् तद्व्यपदेशः । सा केन वा वर्ण्यते न केनापीत्यर्थः । अत्र वसुमत्यां सावयवे पुरीत्वरूपके प्रधाने तदवयवेषु तदुपपादकानि उद्यानेत्यादिरूपाणि षट् । तेषां प्रधानरूपकोत्थापकत्वादङ्गाङ्गिभावसंकरः । एवं सावयवरूपकेऽत्र समारोप्यमाणायाः प्रसिद्धपुर्यां वर्ण्यमानवसुमतीभावावस्थायामनुभयाभेदरूपकत्वमिति बोध्यम् ॥३६॥

**कतीति ।** अनिर्धारितसंख्यावच्छिन्नगमनाश्रयेत्यर्थः । वारशब्दः आवृत्तिपरः । वारांस्त्रीनभिषुण्वत' इति मुरारिः ।

**अविद्या**—(*सखेदम्।*) हन्त। प्रणयिनः समक्षमेव मर्मणि तोदः कृतो वैधेयेन।

**विषयवासना**—अरे, तत्त्वं न जानासि।

सुखमस्त्वसुखं वास्तु नैव साधु निरन्तरम्।
यथा विरहिणी कान्ते रमते किं तथा परा ॥३७॥

**देवी**—अये, चपलस्वभावोऽयम् अस्थिरप्रणय इति। नन्ववगतमेतत्।

**चित्तशर्मा**—(*सोत्प्रासम्।*) देव, श्रूयताम्।

एतास्तावदहं प्रतार्य करणद्वाराणि बद्ध्वा दृढं
निर्व्यापारतया पुरीतदुदरे गूढं निलीय स्थितः।
दुःखासंकलितं नयाम्यनुपदं नो चेद्भवन्तं सुखं
कृत्वा रोगसहस्रगुम्फनमिमाः किं वा विदध्युर्न ते ॥३८॥

---

**सोत्प्रासमिति** 'सोल्लुण्ठनं तु सोत्प्रासम्' इत्यमरः। **प्रातिभासिकानीति**। न व्यावहारिकाणि न वा पारमार्थिकानीत्यर्थः। इदं च सत्तात्रैविध्यपक्षे पारमार्थिकानि बाध्यानि स्थिराणि नित्यानि॥

वैधेयेन मूर्खेण। 'मूर्खवैधेयबालिशा इत्यमरः॥

**सुखमिति**। दुःखमन्यद्वा किमपि निरन्तरम् अनुभूयमानं न पुरुषप्रीतये भवति। प्रत्युत जाड्याय कल्पत इत्यनुभवसिद्धमेतत्। यस्य तत्रापि सन्देहः तं प्रति सामान्येनोक्तं विशेषेण समर्थयते—**यथेति**। परा निरन्तरं निर्विशन्ती। 'उक्तिरर्थान्तरन्यासस्स्यात्सामान्यविशेषयोः' इत्युक्तलक्षणः बिशेषेण सामान्यसमर्थनरूपोऽर्थान्तरन्यासः॥३८॥

एता प्रवृत्तिप्रभृतीः। प्रतार्य वञ्चयित्वा। करणानि इन्द्रियाणि पुरीतत् नाडीविशेषः। तदुदरे तन्मध्ये गूढं यथा तथा विलीय विलीनो भूत्वा स्थितः। **दुःखेति**। 'सुपुप्तिकाले सकले विलीने तमोऽभिभूतः सुखरूपमेति' इति श्रुतेः। स्वापात् प्रबुद्धस्य 'सुखमहमस्वाप्समिति' सुषुप्तौ सुखानुभवस्य 'न किंचिद-

अपि च। इयं किल कदाचित् आश्रितम् उत्कर्षति, कदाचित् अपकर्षति, कदाचित् अभिनन्दयति। तत्तद्विलक्षणगुणभिन्नाः प्रकृतयः तावत् अस्या दुर्वाराः।

**प्रवृत्तिः** धिङ् मूर्ख कुलमहत्तरामपि भट्टिनीम् अभिभवन् जाड्यमेव प्रकाशयसि।

**चित्तशर्मा**—अये जाड्यं चापलं मौर्ख्यम् अन्यद्वा यत्किंचित् विवक्षितम् तदखिलमपि युष्मदीयमेव। किं न प्रसरेयुः सवित्रीगुणाः तत्प्रसवेषु।

**अविद्या**—(*सखेदम्। आत्मगतम्।*) केन किमुपदिष्टं वा यथापुरमयम् अस्मासु न वर्तते।

**चित्तशर्मा**—(*स्मितं कृत्वा।*) राजा सर्वथा अयमेतत्कलहेन निर्विण्णो निवृत्युन्मुख इव दृश्यते।

(*ततः प्रविशति संकल्पो दौवारिकः*)

**दौवारिकः**—देव! तापसी काचन सशिष्या प्रतिहारभुवम् आगता देवपादं दिदृक्षते।

**राजा**—सादरं प्रवेश्यताम्।

---

वेदिषम्' इति दुःखाद्यननुभवस्य चानुसन्धानात्। **नयामीति**। 'नीङ् प्रापणे' 'नीवह्योर्हरतेश्चापि' इति नयतेर्द्विकर्मकत्वात्। 'अजां ग्रामं नयती' तिवत्। 'भवन्तं सुखम्' इति कर्मद्वयनिर्देशः। गुम्भनम् संयोजनम्। **किं वेति**। किं वा दुःखं न विदध्युः सर्वमपि दुःखं विदध्युरेवेत्यर्थः। सुषुप्तिविरहे रोगसमुद्भवः सर्वानुभववैद्यकशास्त्रप्रसिद्धः ॥३८॥

**उत्कर्षति** ऊर्ध्वं नयति। अपकर्षति अधो नयति। स्वर्गनरकप्रापणायेति भावः। अभिनन्दयति संतोषयति। इहैवेति शेषः। इदमुपलक्षणम्।

(*ततः प्रविशति तापसीवेषा सह शिष्यया निवृत्तिः ।*)

**निवृत्तिः**—अये शान्ते तत्रभवत्या शिवभक्त्या अहमेवं किल अभिहिता अस्मि—वत्से निवृत्ते मायागहनकर्मणः चित्तशर्मणो भेदनेनैव जीवराजः अभिमुखीकरणीय. इति । हन्त । परमार्थाविसंवादी भवति महात्मनाम् अध्यवसायः । तथा हि । प्रवृत्तिरिति विषयवासनेति च ये तावदिमे सांप्रतम् अविद्यासाम्राज्यसर्वस्वनिर्वाहिके प्रहिते एतयोस्तावदन्धयोरिव चित्तशर्मावलम्बमन्तरेण कियानपि न प्रचारः । अस्मिस्तु ततो भेदं गमिते तदन्ववायः सर्वोऽपि शिथिलितप्रायः तदिदम् अभिसन्धायैव तद्भेदनाय भगवत्या शिवभक्त्या प्रथमत एव विवेकादयः प्रहिताः । (*पुरो विलोक्य*) । स एष जीवः तेन चित्तशर्मणा सह संलपन् इत आस्ते । यावदेनम् उपसर्पामि (*उपसर्पति ।*)

---

कदाचित् उद्वेजयतीत्याद्यपि द्रष्टव्यम् । ते ते विलक्षणा गुणाः सत्त्वरजस्तमांसि तैर्भिन्नाः । प्रकृतयः अवस्थाः । अस्या अविद्यायाः ।।

**कुलमहत्तरामिति** । 'उगितश्च' इति ह्रस्वाभावपक्षे 'तसिलादिषु' इति पुंवद्भावः ।।

जाड्यम् क्रियास्वप्रभविष्णुत्वम् । चापलम् तुच्छेष्वपि विषयेष्विच्छा । मौर्ख्यम् अविवेकः । अन्यत् उन्मादादि विवक्षितम् । तव मां प्रति वक्तुमिष्टं कुतः इत्यत आह—**किं नेति** । सवित्री माता प्रसवाः अपत्यानि । पितॄन् समनुजायन्ते न रामान्तरमङ्गना' इति न्यायादिति भावः ।।

**स्मितमिति** । ईषदिव हसित्वेत्यर्थः । षीञ् (ष्मिङ्) ईषद्धसने । निर्विण्णः खिन्नः । **निवृत्युन्मुख इवेति** । निर्जिगमिषुरिवेत्यर्थः । तेन निवृत्तिप्रवेशोऽपि सूचितः ।।

दौवारिक द्वारप्रयोजनः प्रतीहारी । 'द्वारादीनांच' इत्यैजागमः । प्रतीहारभुवम् द्वारप्रवेशम् ।।

**जीवः**—(निर्वर्ण्य) इयं सा

**गाढोन्नद्धजटाकलापकपिलश्रीपूतबालातपा**
**बिभ्राणा भसितानुलेपधवलच्छायां तनुं पावनीम् ।**
**भिक्षापात्रमयूरपिच्छचयभृत्पाणिद्वया मेऽधुना**
**काषायाम्बरधारिणी कलयति स्वान्ते धृतिं तापसी ।।३९।।**

---

**शान्त इति** । शिष्यायाः संबोधनम् । तत्रभवत्या पूज्यया । अभिहिता महात्मनां इति शेषः । अभिधानमनुवदति—**वत्स इत्यादि** । अभिमुखीकरणीय इत्यन्तेन । **मायेति** । मायया गहनानि दुरवगाहाणि कर्माणि यस्य सः । **भेदनेनैवेति** । सपरिवाराविद्यैकवाक्यत्वाभावापादेनेनेत्यर्थः । **जीवराज इति** । प्रस्तुतविद्यापरिणय इति शेषः । चित्तस्य प्रवृत्त्युन्मुखत्वे जीवस्य विद्याभिलाषसंभवादिति भावः । युक्तं चैतदित्याह—**हन्तेति** । आश्चर्ये । शिथिलितप्राय इत्यन्तम् अबाधितार्थविषय एव महात्मनां निश्चय इत्यर्थः । सांप्रतं युक्तं प्रथिते प्रसिद्धे ते विना ऐहिकामुष्मिकव्यापारेष्वाविद्यकेषु पुरुषस्य प्रसक्त्यभावादिति भावः । **अन्धयोरिवेति** । यथा मार्गप्रदर्शकं कंचिदवलम्बनं बिना अन्धस्य न स्वोचितविषयप्रचारः तथा चित्तशर्मावलम्बं बिना एतयोरपि न प्रचारः । 'यद्धि मनसा ध्यायति तद्वाचा वदति तत्कर्मणा करोति' इति श्रुतेरिति भावः । अस्मिंस्तु चित्तशर्मणि तु । तदन्ववायः अविद्यापरिवारः । शथिलितः अप्रयोजकः । तद्भेदनाय चित्तशर्मभेदनाय । प्रहिताः प्रेषिताः । तथा च **तथाहि** इत्यादिना शिवभक्त्युत्साहबीजानुगुण्येनार्थानां संप्रधारणस्य निबन्धनात् संप्रधारणमर्थानां युक्तिरिति लक्षितं युक्त्याख्यमङ्गं कथितम् । एवं शिवभक्त्युपन्यस्तचित्तशर्मभेदेन विद्यासंघटनरूपकार्यद्वये साध्यसाधनभावापन्ने साधनांशे विवेकादिभिः साधिते परिशिष्टसाध्यांशः स्वेन साधनीय इत्यभिसन्धाय संप्रति स्वकार्यं प्रस्तौति—**पुर इति** । **उपसर्पामीति** । यावत्पुरानिपातयोर्लट् ।

निर्वर्ण्य निरीक्ष्यसेति दौवारिकनिर्दिष्टेत्यर्थः ।।

(*उपसृत्य प्रणमति* ।)

**निवृत्तिः**— सान्द्रानन्दघनो भूयाः ।

**जीवः**——भगवति, इत आस्यताम् । (इत्यासनं निर्दिशति ।)

(*निवृत्तिरुपविशति* ।)

**राजा**—कः प्रदेशोऽलंक्रियते तत्रभवत्या, कानि च भुवनपावनानि अभिधानाक्षराणि, किमुद्देश्यकश्चायमिहागम इति । विविदिषामि

**निवृत्तिः**—वत्स, श्रूयताम् ।

**दर्पणवदभिमुखानां दर्शयदात्मस्वरूपमखिलानाम् ।**
**विस्मयशेवधिरास्ते वेदारण्याभिधं शिवक्षेत्रम् ।४०।।**

---

**कपिलश्रीरिति ।** कपिला श्रीरिति कर्मधारये 'स्त्रियाः पुंवत्' इति पुंवद्भावः । तया धूतः तिरस्कृतः । अनुलेपनधवलच्छायासितभस्मावकुण्ठित इति तापसवर्णनप्रकरणे पुराणवचनादिति भावः । पावनीम् दंष्ट्रादीनामिति भावः । **भिक्षापात्रेति ।** पाणिद्वयं यथासंख्यं संबन्धः । धृतिम् उत्साहम् । अत्र स्वभावोक्तिरलङ्कारः । 'स्वभावोक्तिः स्वभावस्य जात्यादिस्थस्य वर्णनम्' इति लक्षणम् ।।३९।।

**सान्द्रेति ।** 'आनन्दैकरसो भूया' इति आशीर्वादः ।।

**अलंक्रियते ।** वासनेति शेषः । **कानिच इति ।** पर्यायोक्तविधया नाम । **किम् इति प्रश्नः ।।**

प्रथमप्रश्नस्योत्तरमाह—दर्पणवत् इतिश्लोकद्वयेन । यथा खलु दर्पणः स्वसंमुखानाम् आत्मस्वरूपं देहस्वरूपं दर्शयति तथा वेदारण्यनामकं शिवस्थानं तत्र तस्य प्रकाशमानत्वादिति भावः । अत्र प्रतिज्ञानुगुणतया वेदारण्याभिधम् इति प्रसिद्धशिवक्षेत्रप्रदर्शनव्याजेन अप्रस्तुतप्रशंसान्यायेन वेदा एवातिगहनत्वात् अरण्यमिवेति वेदत्वेन कृत्स्नो वेदो वा, वेदा इति आरण्यमिति

तस्मिन्निष्टफलद्रुमाः कति ततैः शाखाशतैरुच्छ्रिता
हृद्योपासनवल्लरीकवचितास्तत्र प्रदेशाः कति ।
तेषां मूलफलादिकानि कति वा तत्सर्वमास्तामहो
तत्रत्यामृतमाधुरी न परतः कुत्रापि सत्यं ब्रुवे ॥४१॥

---

चाभिधा यस्येति 'गोबलीवर्दन्यायेन' कर्मब्रह्मकाण्डात्मकभागद्वयापन्नवेदो वा गृह्यते । अस्मिन् पक्षे आरण्यशब्दो ब्रह्मकाण्डोपलक्षकः इत्यर्थान्तरसूचनमपि विवक्षितम् ॥४०॥

**तस्मिन्निति ।** शिवक्षेत्रे इष्टफला आम्रादयो द्रुमाः । ततैः विशालैः । हृद्या अत एव उपासना उपासनीयाः कर्मणि ल्युट् तेषाम् प्रदेशानामित्यर्थः । अमृतं जलमिति क्षेत्रपक्षे । वेदपक्षे तु इष्टा नियोगाः ज्योतिष्टोमाः । त एवं स्वर्गादिफलसाधनत्वात् फलद्रुमाः । शाखाः तैत्तिरीयादयः । उपासनानि दहरशाण्डिल्योपकोसलविद्यादिरूपाणि इति । अमृतम् निःश्रेयसम् । परतः सप्तम्यास्तसिः । परत्र कुत्रापि नेत्यर्थः । इदं च गुणकथनरूपत्वात् विलोभयतीति विलोभनं नामाङ्गम् । 'गुणाख्यानात् विलोभनम्' इति लक्षणम् ॥४१॥

तत्र शिवक्षेत्रे । तत्वार्थसंदर्शिनी संदर्शयती । विज्ञानम् अन्तःकरणम् । 'विज्ञानं यज्ञं तनुते । कर्माणि तनुतेऽपि च' इति श्रुतेः । तस्मादुत्पन्नां निवृत्तिसंज्ञामाचक्षत इत्यनेन कानि च भुवनेत्यादिद्वितीयप्रश्नस्योत्तरमुक्तम् । तेन पूर्वं पर्यायोक्तविधया निगूढार्थस्य प्रश्नद्वयस्य प्रकाशनादुद्भेदो नामाङ्गम्। 'उद्भेदो गूढभेदनम्' इति वचनात् । किमुद्देश्यक इति तृतीयप्रश्नोत्तरमाह—**धर्मिष्ठस्येति ।** मनाक् सकृदिति यावत् ॥

**निरुपाधिकेन** निर्व्याजेन ।

**सकलेति ।** चतुर्विधेत्यर्थः । **शिवभक्तेरिति ।** शिवभक्तिमतामेव शिवक्षेत्रप्रवेशः सुलभ इति भावः । तेनाभिमतसिद्ध्या राज्ञः सुखागमात् प्राप्तिरुक्ता । 'प्राप्तिः सुखागम' इति वचनात् । विधेयाः स्वाधीनाः । परिचयेन

तत्रास्ते शिवभक्तिरित्यनुपमा तत्त्वार्थसंदर्शने
तत्संदर्शितसंप्रदायसरणिस्तस्यास्तु शिष्यास्म्यहम् ।
विज्ञानप्रभवां निवृत्तिरिति मामाचक्षते योगिनी
धर्मिष्ठस्य दिदृक्षया तव मनागत्राहमभ्यागता ।।४२।।

**राजा**--परम् अनुगृहीतोऽस्मि निरुपाधिकेन वात्सल्येन । किम् अस्मादृशामपि तत्र प्रवेशः स्यात् ।

**निवृत्तिः**--परमकारुणिक्याः सकलपुमर्थप्रसविञ्याः शिवभक्तेः प्रसादादेव सुकरः तत्र प्रवेशः । तस्यां प्रसीदन्त्यामेव तत्रत्याः शमदमादयो विधेया भवन्ति । विधेयेषु च तेषु उपनिषद्देव्याः परिचयेन महत्तरं श्रेयो भवेत् ।

**राजा**--एतादृशी विष्णुभक्तिरिति हि तत्र तत्र श्रूयते । शिवभक्तिरिति किममुष्या नामान्तरम् ।

**निवृत्तिः**--अथ किम् । शृणु तावत् ।

---

श्रवणादिना । तथा च शिवभक्तस्य शमदमादयः तेषु च सत्सु अधिनारिणः वेदान्तश्रवणादिरूपसाधनसंपत्त्या मोक्षो भवतीति भावः ।।

**विष्णुभक्तिरिति ।**

'मन्मना भव मद्भक्तो मद्याजी मां नमस्कुरु ।।'
'सर्वधर्मान् परित्यज्य मामेकं शरणं व्रज ।
अहं त्वा सर्वपापेभ्यो मोक्षयिष्यामि मा शुचः ।।'
वर्णाश्रमाचारवता पुरुषेण परः पुमान् ।
विष्णुराराध्यते पन्था नान्यस्तत्तोषकारकः ।।'

इत्यादिगीता-विष्णुपुराणादिवचनैः विष्णुभक्तिः निःश्रेयससाधनमिति श्रूयत इत्यर्थः ।।

**विष्णुर्न शिवादन्यः शिवशक्तेः स खलु पौरुषं रूपम् ।**
**शक्तिश्च नातिरिक्ता शक्तिमतोऽतः शिवात्परं नान्यत् ।।४३।।**

**राजा—**(*सोत्कण्ठम्*) भगवति ! कीदृशं तन्महत्तरं श्रेयः ।

**निवृत्तिः—**( *कर्णे* ) एवमिव ।

---

अथ किम् इत्यखण्डमङ्गीकारे ।।

**विष्णुरिति ।** 'शिवमद्वैतं चतुर्थं मन्यन्ते' 'स आत्मा स विज्ञेय' इत्यादि श्रुतिशतैरवगताद्वितीयभावस्यापि शिवस्यानन्दो विषयानुभावो नित्यत्वं चेति सन्ति धर्माः । 'अपृथक्त्वेऽपि चैतन्यात् पृथगिवावभासन्त' इति पञ्चपादिकोक्तरीत्या कल्पितधर्मधर्मिभावापन्नतया धर्मः शक्तिः धर्मी शक्तिमान् । शक्तेश्च स्त्रीपुंसरूपेण द्वैरूप्यम् । 'स्त्रीरूपं देवी पुंरूपं विष्णुरिति ।' 'या तस्य पार्श्वगा बाला सा पार्वत्यराजो हरिः' इत्यादिवचनैरवगमात् ।

'शक्तिशक्तिमतोश्च वह्निदाहकयोरिव ।
नानयोरन्तरं विद्याच्चन्द्रचन्द्रिकयोरिव ।।'

इत्यादिवचनैरभेदावगमात् सर्वमिदमद्वितीये शिवे मायया कल्पितमिति शिव एव तत्त्वम्, शिवादन्यत् किंचिदपि नास्तीति निःश्रेयससाधनीभूता भक्तिः क्वचित् विष्णुभक्तिनाम्ना, क्वचिञ्च शिवभक्तिनाम्ना व्यव ह्रियते इत्येतत्सर्वं रत्नत्रयपरीक्षादिषु स्पष्टम् । गीतादिवचनानि तु गीतायां, कूर्मपुराणे, ईश्वरगीतायाम् 'अर्जुनाय स्वयं साक्षाद्दत्तवानिदमुत्तमम्' इति पूर्वोक्तशिवोत्कर्षविषयत्वकथनेन 'मन्मना' 'अहंत्वा' इत्यादावस्मच्छब्दस्य स्वान्तर्यामि परमेश्वरपरत्वात् न शङ्कावकाशः । विष्णुपुराणवचनं तु यथा न विरुद्धं तथा ब्रह्मतर्कस्तवादौ स्पष्टम् ।४३।।

**अपवार्येति** । 'रहस्यं कथ्यतेऽन्यस्य परावृत्त्यापवारितम्' इत्युक्तलक्षणमपवारणं कृत्वेत्यर्थः । तथा च सहजेर्षति सुख अपि नाम जात्वितिबहु दुःखस्य च निबन्धनात् विधानं सुखदुःखकृदित्युक्तविधानं दर्शितम् ।

**राजा—** (*सहर्षोल्लासम् अपवार्य।*) अपि नाम जातु ममैतदुपपद्येत ।

**चित्तशर्मा—**वयस्य ! महानुभावायास्तदस्या निवृत्तेरनुग्रहादेव तदिदं श्रेयो लभ्यते ।

**अविद्या—** (*साशङ्कम्।*) नूनम् अमीषाम् इयच्चिरोपनतेन कुटिलेङ्गितेन संलापेन मत्प्रतीपेन भवितव्यम् । भवतु । विमृश्य प्रतिविधास्यामि ।

(*नेपथ्ये वैतालिकौ*)

**एकः—**

**रोमन्थालसलोचना वनमृगी निद्राति मूले तरो—**
**रम्भस्तप्तमपास्य मीननिवहः पङ्काविलं गाहते ।**
**धावं धावमितस्ततो मरुजले तापाभिभूतः करी**
**सोत्कण्ठं कलहंसिका कलरवैर्व्यावर्तते पद्मिनीम् ।।४४।।**

**अपरः—**

**तापत्रस्त इवाधुना बहिर्गतो न स्पन्दते मारुतः**
**प्राणायामवशेन योगिन इव स्तब्धा इमे पादपाः ।**

---

यस्य **संलापेनेति** । 'संलापो भाषणं मिथः' इत्यमरः । प्रतीपेन विरुद्धेन । विमृश्य विचार्य ।

**रोमन्थेति** । प्राग्भक्षितस्य प्रत्याहृत्य पुनर्भक्षणानुकूलो हनुचलनव्यापारः रोमन्थः । तेनालसे लोचने यस्याः । **अम्भस्तप्तमिति** । उपरि वा सन्ति सूर्यकिरणसंपर्कादिति भावः । **पङ्काविलमिति** । अनेन सरोमूलमुच्यते । मरुजले जलमिदमिति भ्रान्तविषयमरुस्थले । **पद्मिनीमिति** । अयं प्रदेशो जलवान् कलहंसिकारवत्वात् इत्यनुमाय करी मरुस्थलात् पद्मिनीं प्रति व्यावर्तत इत्यर्थः । एतेन निवृत्त्युपदेशात् विद्यास्वरूपं सम्यगवगम्य तदभिमुखो जीवराज इति सूचितम् ।।४४।।

छाया पश्चिमदिक्प्रवृत्तिविततता प्रक्षीयमाणा शनै-
रेषा ह्यभ्युदयाचलश्रियमितो जाता निवृत्त्युन्मुखी ।।४५।।

**चित्तशर्मा** (*सहर्षम् । जनान्तिकम् ।*) वयस्य ! तदिदं वैतालिकवचनमेव निदर्शनं मदभिहितार्थे ।

(**राजा सानन्दमभ्युपगच्छति ।**)

**अविद्या**—देव, मध्याह्नसमयोऽतिवर्तते । तन्माध्यन्दिननियमनिर्वर्तनाय विसृज्यतां तापसी । देवेनापि माध्यन्दिननियमा

---

इत इह बहिः न स्पन्दते मारुतः तत्र हेतुरुत्प्रेक्ष्यते । **तापत्रस्त इवेति । योगिन इवेति** । माध्यन्दिनजपादिषु प्राणायामस्य

'सव्याहृतिं सप्रणवां गायत्रीं शिरसा सह ।
त्रिः पठेदायतप्राणः प्राणायामः स उच्यते ।।''

इत्युक्तलक्षणस्य संभवादित्यर्थः । स्तब्धाः निश्चालाः **छायेति** । इतः प्रागिति शेषः । प्रक्षीयमाणा इदानीमित्यर्थः । अभ्युदयाचलश्रियम् उद्दिश्य । इतः पश्चिमदेशः । निवृत्त्युन्मुखी जाता । अनेन संप्रति निवृत्त्युन्मुखः अभ्युदयप्रेप्सु जीवराजोऽपि सूच्यते ।।४५।।

अत एव तदेतदभिसन्धाय स्वोक्तार्थसंवादलाभात् प्रहर्षयुक्तः चित्तशर्माहेत्याह—**चित्तशर्मेति । जनान्तिकमिति ।**

'त्रिपताकाकरेणान्यानपवार्यान्तरा कथाम् ।
अन्योन्यामन्त्रणं यत्स्यात् जनान्ते तज्जनान्तिकम् ।।'

निर्वर्त्यन्ताम् । अहमपि तदुपकरणानि संनिधापयामि ।

(इति निष्क्रान्ताः सर्वे ।)

प्रथमोऽङ्कः

---

इति तल्लक्षणम् । निदर्शनम् सूचकम् । अनेन राज्ञः प्रोत्साहनात् भेदो नामाङ्गमुक्तम् । तल्लक्षणं तु 'भेदः प्रोत्साहना मता' इति । लाभेन दृढीकरणादानन्द इत्यर्थः । तत् तस्मात् । माध्यन्दिनेति । अन्यथा तापस्य उपरोधो भवेदिति भावः । तेन

'एकाहे चैकरात्रे वा चरितं तत्र वर्णयेत्' इति लक्षणं सूचितम् । तदुपाकरणानि नियमोपाकरणानि ।

**निष्क्रान्ताः सर्व एवेति** । 'तेषामन्ते विनिर्गम' इत्यङ्कलक्षणादिति भावः ।।

इति प्रथमोऽङ्कः

---

## द्वितीयोऽङ्कः

(ततः प्रविशति प्रवृत्तिः असूया च)

**असूया**—ततस्ततः ।

**प्रवृत्तिः** प्रागेव 'चित्तशर्मणा सह रहसि कतिपये तापसाः संलपितवन्तः' इति चेटीमुखात् अवकर्ण्य सन्देहतरलिता । तदनु समक्षमेव कर्णे किमपि रहस्यम् अभिधाय राजानम् अतिपर्युत्सुकितवत्या कया च न च तापस्या नितान्तसंक्षोभितहृदया प्रियसखी भट्टिनी मामवोचत्—

---

एवं प्रथमाङ्कं समाप्य संप्रति जीवराजस्य विद्यारूपविषयान्तराशक्ति विदितवत्या अविद्यायास्तद्विघटनोपायचिन्तनप्रकारं द्वितीयाङ्के विवक्षुः प्रवृत्त्यसूयारूपनीचपात्रमात्रप्रयोज्यत्वेन वर्तिष्यमाणकथासंग्राहकं प्रवेशकमारभते—तत इति ।

**प्रागिति** । विवेकादयस्तापसाः शिवभक्तिप्रेषिताः चित्तशर्माणं स्ववशीकृतवन्त इति कस्याश्चित् चेट्या वचनादवकर्ण्य सन्देहकम्पिता जाता । तदनन्तरं तापस्या निवृत्त्या जीवराजस्य कर्णे एवमिवेति किमपि रहस्यं कथयित्वा पर्युत्सुकीकृतवत्या संक्षुब्धहृदया देवीत्यर्थः । समक्षम् प्रत्यक्षम् । 'प्रतिपरसमनुभ्योक्ष्ण' इति समासान्तोऽच् प्रत्ययः ।

'वेदारण्यनिकेतनाः शमदमप्रष्ठा महायोगिनः
श्रूयन्ते कतिचिन्निवृत्तिरिति च ख्याता तथा तापसी।
ते सर्वे शिवभक्तिमार्गनिरता ये तावदत्रागता—
स्तन्नामान इमे परे किमथवा साक्षात्त इत्यामृशेः ॥१॥

यदि खलु तदितर एते यत्किंचिदिदं ततो न भेतव्यम्।
अथ यदि त एव चेत्स्युर्यत्नो भूयानिह प्रतीकारे ॥२॥

अतस्तदिदमविचिकित्समामृश्य समागच्छ इति, तदनु 'कथंचित् वेदारण्यमधिगम्य केन कुत्र निषद्यते, कः किमाचरति, कथमिदम् अवगच्छेयम्' इति चिन्तातरलितायां मयि यदृच्छया तत्र कामना संप्राप्ता। तदनु तया विविच्य सकलम् अभिहितम्—

---

**शमदमप्रष्ठा** इति। शमदमप्रष्ठौ अग्रगामिनी येषामित्यर्थः। 'प्रष्ठोऽग्रगामिनि' इति निपातः। **तापसीति**। श्रूयत इति वचनविपरिणामेनानुषङ्गः। शिवभक्तीति। शिवभक्तिः प्रदर्शितेत्यर्थः। एवं स्थिते प्रकृतमाह — **ये तावदिति**। वेदारण्यस्थानामत्रागतानां च किं नामैक्यमेव। अर्थतस्तु भेदः। उत नाम्नाऽर्थतोऽप्यैक्यमिति विचारयेत्यर्थः ॥१॥

विचारफलं दर्शयति—यदीति। अथेति। अथ शब्दः अथ मत इत्यादिवत् पक्षान्तरपरिग्रहार्थः। **भूयानिति**। तेषामत्यन्तदुर्धर्षत्वात् तत्पराजये यत्नो महान् विधेय इत्यर्थः ॥२॥

देव्या वचनमुपसंहरति—**अत इति। कथंचिदिति**। प्रयासेनेत्यर्थः। तादृशे शिवक्षेत्रे स्वप्रवेशस्य दुर्लभत्वादिति भावः। केनेति। शमदमादिषु मध्य इति शेषः। एवमुत्तरत्रापि। यदृच्छया अकस्मात्। **अभिहितमिति**। कामनायाः पुरुषार्थचतुष्टयानुगतत्वात् तया सर्वं विदितमिति भावः ॥

तदेवमविद्याकुलविघटनाय विरक्तिनिवृत्तिभ्यां सह विवेकशमदमादि-बहुलपरिवारा शिवभक्तिरियमत्र प्रभवति' इति। त्वं पुनः क्व प्रस्थितासि।

**असूया**—भट्टिन्या अहमेवं संदिष्टास्मि— 'असूये काम्यक्रियो-पासनाः समेत्य ब्रूहि—कदाचिदियं तत्र राजा यदि समागच्छेत् तदा स यथा भक्तिविरक्तिनिवृत्तिप्रभृतिभिः नाक्रम्येत, तथा युष्मदीयविलासचातुर्यरामणीयकैरेव वशीकरणीय' इति। तत् इह को मार्गः, किं मुखम्' इति बुभुत्सातरलिता दैवादत्रभवत्योपगता विदितकरणीया अस्मि। तत्साधयामि।

**प्रवृत्तिः**— इदमपि स्थान एव संविधानम्, अवश्यकरणीयं च। भूयानतीतः कालः। इयता हि कालेन चित्रशालाभ्यन्तरे विषय-वासनया सह भट्टिनी चिरेण मम मार्गं प्रतीक्ष्य निर्विद्येत। तदहम् अविलम्बितमेव तत्सकाशं गच्छामि। त्वयापि यथानियोग-माचर्यताम्।

**(इति *परिक्रम्य निष्क्रान्ते*।)**

***प्रवेशकः***

---

अस्मत्संबन्धी कामः पुरोगमा येषामिति बहुव्रीहिः। समम् सह। **इत इति**। पूर्वभाग इत्यर्थः। कर्मकाण्ड इति हृदयम्। काम्मक्रियाः इष्टिपश्वादयः। उपासनाः दहराद्याः परतः परभागे। ब्रह्मकाण्ड इति यावत्। ते शमप्रभृतयः सन्तीति शेषः। ततः किमित्यत आह— **त इति शुद्धतरः** अतिशयेन शुद्धः। दुस्सङ्गतः दुस्सङ्गात्। **अनर्थफलत्वेन नीचात्**

'अस्मत्कामपुरोगमैः सममितः काम्यक्रियोपासनाः
शुद्धास्ते परतः शमप्रभृतयस्ते मन्वते सांप्रतम् ।
राजा शुद्धतरः किलैष तदिमं व्याकृष्य दुस्सङ्गतो
नीचादस्य महात्मनः सुसदृशीं दद्यामविद्यामिति ॥३॥

(ततः प्रविशति विषयवासनया साकमविद्या ।)

**अविद्या**—सखि विषयवासने, भवत्सहायापि नन्वहमीदृशीं दशामुपागतास्मि ।

**विषयवासना**—किमेतावती मयि भट्टिन्याः प्रतिपत्तिः ।

**अविद्या**—किमल्पप्रभावा भवती । तथा हि ।

शास्त्राणि सन्तु सुबहूनि पठन्तु तानि
सर्वे त्वमन्यथयसे निजवैभवेन ।
कृष्टस्त्वया विवलते विषयेषु नाम
बद्धो बलीमुख इवाशरणो बुधोऽपि ॥४॥

---

विद्यां दद्यामिति संबन्धः । द्वितीयम् इति करणं कामनया अभिहितमित्यस्योपसंहारः ॥३॥

**प्रभवतीति** । समर्थेत्यर्थः ॥

सन्देशं दर्शयति—**यथेति । युष्मदीयेति ।** विलासाः विभ्रमाः, चातुर्यम् कौशलम् वचनेषु, रामणीयकम् सौन्दर्यं नेपथ्यादिभिः अस्तु मार्गः, स किं मुखेनावगन्तव्य इति । **किं मुखमिति** द्वितीयचिन्तार्थः। **विदितेति ।** त्वन्मुखेन मार्गवेदनादित्यर्थः । साधयामि गच्छामि । ण्यन्तस्य साधयगंत्यर्थत्वप्रसिद्धेरिति भावः ॥

स्थान एव युक्तमेव देव्याः संविधानम् अनागतविधानमित्यर्थः तदेव यतुगर्भविशेषणोपन्यासेन दर्शयति—**अवश्येति । भूयानिति ।** मन्निर्गमना-

नन्तरमिति शेषः। **खिन्नशालेति।** विनोदादिति भावः निर्विद्येत खिद्येत। अविलम्बितम् शीघ्रम्। यथानियोगम् नियोगमनतिक्रम्य ।।

**प्रवेशक इति।**

'तद्वदेवानुदात्तोक्त्या नीचपात्रप्रयोजितः ।
प्रवेशोऽङ्कद्वयस्यान्तः शेषार्थस्योपसूचकः ।।'

विष्कम्भवदेव भूतभाव्यार्थप्रदर्शकत्वम्। किन्त्वनुदात्तोक्त्या नीचपात्रप्रयोजित इति विष्कम्भाद्विशेष इत्यर्थः।

प्रवेशकः—प्रागसूयावाक्ये विषयवासनया सह देवीत्युक्त्या सूचिता। तादृश्येव देवी रङ्गं प्रविशतीत्याह— **तत** इति ।।

भवत्सहायापि। भवती सहायो यस्या इति बहुव्रीहिः। 'सर्वनाम्नो वृत्तिमात्रेति पुंवद्भावः। दशाम् अवस्थाम्। प्रतिपत्तुर्बहुमानः भवत्सहायापीत्यनेन सूचित इत्यर्थः ।।

**सर्वमिति।** 'परीक्ष्य लोकान् कर्मचितान्, तद्यथेह कर्मचितो लोकः क्षीयत' इत्यादिशास्त्राभ्यासशीलो विद्वानपि न निर्विद्यते। नापि विरज्यते। किन्त्वनिदमादिविषयवासनामहिम्ना पश्वादिवत् यथापूर्वं विषयेषु व्याप्रियत एवेति फलतोऽन्यथाकरोषीत्यर्थः। तदुक्तं भाष्ये— 'पश्वादिभिश्चाविशेषात्। यथा हि पश्वादयः शब्दादिभिः श्रोत्रादीनां संबन्धे सति शब्दादिविज्ञाने प्रतिकूले जाते ततो निवर्तन्ते, अनुकूले च प्रवर्तन्ते। यथा दण्डोद्यतकरं पुरुषमभिमुखमुपलभ्य मां हन्तुमयमिच्छतीति पलायितुमारभन्ते, हरिततृणपाणिमुपलभ्य तं प्रत्यभिमुखीभवन्ति एवं पुरुषा अपि व्युत्पन्नचित्ताः क्रूरदृष्टीनाक्रोशन्तः खड्गोद्यतकरान् बलवत उपलभ्य ततो निवर्तन्ते, तद्विपरीतान् प्रतिनिवर्तन्ते। अतः समानः पश्वादिभिः पुरुषाणां प्रमाणमेव व्यवहारः पश्वादीनां प्रसिद्धोऽविवेकपूर्वकः प्रत्यक्षादिव्यवहारः तत्सामान्यदर्शनात् व्युत्पत्तिमतामपि पुरुषाणां प्रत्यक्षादिव्यवहारः तत्कालः समान इति निश्चीयते। आपस्तम्बोऽपि 'बुद्धे चेत्क्षेमप्रापणमिहैव न दुःखमुपलभेत' इत्याह। **अन्यभयस** इति। अन्यथाशब्दात् 'तत्करोति' इति णिचि इष्टवद्भावेन टिलोपे बोध्यम्। नायं स्तुत्यर्थम्, यथाकथंचिदर्थवादः। अपि तर्हि प्रत्यक्षदृष्ट एवेत्याह—**क्रुष्ट** इति। बलीमुखः मर्कटः ।।४।।

**विषयवासना**—सखि, किमेतावदद्य ते संप्राप्तम् ।

**अविद्या**—शृणु तावत् ।

**अग्रेऽभूदहमेक एव न परः कश्चिद्द्वितीयोऽभव-**
**त्ताद्दृत्तस्य मयैव मित्र तनयाः संबन्धिनो बान्धवाः ।**
**किं भूयः कथनेन भोगविषया लोका इमे लम्भिताः**
**सोऽयं मय्यधुना विभाति विमुखः केनेति न ज्ञायते ॥५॥**

---

**एतावदिति** । ईदृशनिर्वेदकारणमित्यर्थः ।

**अग्र इति** । मत्परिग्रहात् प्रागित्यर्थः । यद्यपि 'अविद्या तच्चितोर्योगः षडस्माकमनादय' इत्यभियुक्तवचनादविद्यासंबन्धोऽप्य नादिरेव । तथापि सृष्टेः प्राक् कार्याभिव्यक्त्यभावात् अव्यक्ततयेदमिति परिग्रहश्च कार्योन्मुख्या-न्मुख्यमिति हृदयं बोध्यम् । यद्वा अग्रे सृष्टिप्राक्काले । 'सदेव सोम्येदमग्र आसीत् एकमेवाद्वितीयम्' 'आत्मा वा इदमेक एवाग्र आसीत्' इत्यादिश्रुतौ अग्रशब्दस्य तदर्थकत्वेन व्याख्याततत्वादिति भावः । **एक एवेति** । अनेनास्यां दशायां—

'कन्या वरयते रूपं माता वित्तं पिता श्रुतम् ।
बान्धवाः कुलमिच्छन्ति मिष्टान्नमितरे जनाः ॥'

इत्यादिशास्त्रोक्तवरगुणाभावो दर्शितः । न पुनः कश्चिदिति घटकोऽपि कश्चिन्नासीदित्यर्थः । संबन्धिनः कन्यापुत्रश्वशुरादयः । बान्धवाः मातुलादयः । **किमिति** । वाचा विस्तरेण न किंचित् फलमित्यर्थः । एकयैवोक्तिभङ्ग्या मत्कृतं सर्वं निवेदयामीत्याह—**भोगेति** । सर्वेऽपि लोका एतद्भोगाय मयैव लम्भिताः संपादिताः । 'तदैक्षत बहु स्यां प्रजायेय' 'स ऐक्षत लोकान् उत्सृजा इति' इत्यादिश्रुतिभिः ईक्षणादिशब्दित अविद्यावृत्तिरूप आलोचनमात्रेणाविद्यया सकलप्रपञ्चसृष्टिवर्णनादिति बोध्यम् । **मयैवेति** । मत्परिग्रहादेवेत्यर्थः । एवं च यद्यपि वीक्षणरूपसहायसंपत्त्यपेक्षणान्मयैवेतीतरव्यवच्छेदानुपपत्तिः । तथाप्यविद्यायाः प्राधान्यात् न दोषः । **सोऽयमिति** । उक्तप्रकारेण प्राङ् निर्गुणः पश्चादुपकृत इत्यर्थः । तथा च वैमुख्यकारणाभावेऽपि केनेति हेतु-नेति शेषः ॥५॥

किं च ।

किं दैवं परिपन्थि वा मम कया किं बोधितं वा मृषा
तादृक्प्रेमतरङ्गितोऽतिसरसः स्वामी स जीवोऽधुना ।
मामालोकयते जनानिव जनः शुष्कप्रवृत्त्या दृशा ।
किंरूपेण मनोहरेण बहुना भोग्येन भाग्येन वा । ६॥

न केवलम् अस्य बिमुखतैव मां व्यथयति । अपि तु तदनुमीयमाना विमतनायिकासक्तिसंभावनापि ।

**विषयवासना**—(*सोत्प्रासम्* )

**ननु ते विदिता सकलैरघटितघटनापटीयसी शक्तिः ।**
**अहमपि ते सध्रीची कथमस्थाने विशङ्कते भवती ॥७॥**

सम्यक् प्रवृत्तिरुपलभ्यताम् ।

**अर्चिष्मा**—(*स्मृतिमभिनीय* ।) प्रागेव शङ्कितविषयोदन्त विमर्शनाय प्रहिता प्रवृत्तिः किमद्यापि नागता ।

---

दैवम् अदृष्टः परिपन्थि विरोधिकयेति । असूययेति शेषः । मृषा मिथ्याभूतम् । तादृक् सर्वलोकप्रसिद्धः । गत इति शेषः । प्रेमा गाढस्नेहः तस्य तरङ्गितः प्रतिमुद्गराविर्भावपरम्परा सास्य संजाता प्रेमतरङ्गितः तदस्य संजातमिति इतच् । निरतिशयप्रेमशालीत्यर्थः । **जनानिवेति** । आदरं विनेति भावः । अतएवाह—**शुष्केति** । नीरस इत्यर्थः । **किमिति** । 'प्रियेषु सौभाग्य-फला हि चारुता' इति न्यायादिति भावः । अत्र शुष्कप्रवृत्त्या दृशा स्वालोकने कार्ये किं दैवमित्यादिहेतुद्वयमुत्प्रेक्ष्यत इत्यसिद्धविषया हेतूत्प्रेक्षालङ्कारः । सा च व्यञ्जकाप्रयोगात् गम्या । **भाग्येन वेति** । न केवलं रूपमात्रं निष्फलम्, किं तु भोग्यादिकं सर्वमपीति भावः ॥ ६ ॥

अनुमीयमाना ज्ञायमानेत्यर्थः । वैमुख्यरूपहेतुज्ञानाधीनत्वेनानुष्ठीय-मानेत्युक्तिः ॥

(ततः प्रविशति प्रवृत्तिः ।)

**प्रवृत्तिः**—कथमत्रैव विषयवासनया सह भद्रपीठमध्यास्ते देवी। यैषा

पश्यन्त्येव न पश्यति प्रणयिनी वस्तून्यहो चक्षुषा
शृण्वत्येव शृणोति न प्रियसखी नर्मानुलापानपि
चेतः क्वापि वचः कुतोऽपि तदहं मन्येऽधुना चिन्तया ।
पत्युर्विप्रियजन्मना चिरमसावाकृष्यते केवलम् ॥८॥

अत एव किल

---

**विदितेति** । ऐन्द्रजालिकप्रसारित मायायाम् अघटितघटनापटीयस्त्वस्य प्रसिद्धत्वादिति भावः । सध्रीची सहकारिणी । अन्तःकरणं विना तयैवं शङ्का न युक्तेति भावः प्रवृत्तिः वृत्तान्तः । अत्र प्रवृत्तिपदोपादानं प्रवेक्ष्यमाण प्रवृत्तिसूचनाय ॥

अत एवाह—शङ्कितविषयेत्यादि । शङ्कितविषयः उदन्तः वृत्तान्तः ॥

भद्रपीठम् 'अधिशीङ्स्थासां कर्म' इति द्वितीया ॥

**पश्यन्तीति** । दर्शनप्रयुक्तफलाभावादिति भावः । एवं शृण्वत्येवेत्यपि । प्रणयिनी प्रीतियुक्ता । अहो आश्चर्ये । प्रियसखीनां नायिकोपच्छन्दनार्थान् आलापानपि न शृणोतीत्यर्थः । न पश्यति न शृणोतीत्युभयत्रापि हेतुमाह—**चेत** इति । तथा च 'यद्धि मनसा ध्यायति तद्वाचा वदति, तत्कर्मणा करोति' इति श्रुत्या अनुभवेन च मनसंनिहितानामेव सर्वेन्द्रियाणां स्वविषये प्रवृत्तिः । तदभावे वागादीन्द्रियाणि न फलोपहितज्ञानजनकानि । अत एव 'व्यासङ्गानुपपत्तिर्मनसो लिङ्गम्' इति सूत्रमिति भावः । विप्रियात् विरुद्धार्थानुसन्धानात् जन्म यस्या इति व्यधिकरणबहुव्रीहिः । स च सच्छास्त्रजन्मा हि विवेकलाभ इति 'सप्तमी विशेषणे बहुव्रीहौ' इति सूत्रेण ज्ञापित इति भावः । अत्र चिन्तया कृष्यत इति सिद्धस्य फलस्य निबन्धनात् सिद्धविषया फलोत्प्रेक्षा । मन्य इति चोत्प्रेक्षाव्यञ्जकः शब्दः । तदुक्तम्—

प्रातश्चन्द्रकलेव पुष्यति दृशोर्नानन्दमस्यास्तनु-
र्निश्वासोष्मविघट्टनेन गलितो बिम्बाधरे शोणिमा ।
वीटी चित्रगतेव तिष्ठति चिरं चिन्मुद्रया मुद्रिता
संत्रस्तो विफलोद्यमः परिजनः पर्यन्तमासेवते ॥९॥

तदुपसर्पाम्येनाम् । (*उपसर्पति ।*)

**देवी**—(*पुरोऽवलोक्य ।*) अयि प्रवृत्ते, ननु स्मृतमात्र एव संनिहितासि । मया तत्रैव पुनरपि किंचित्कार्यविशेषाय प्रहिता किमसूया त्वया दृष्टा ।

**प्रवृत्तिः**—अथ किम् । अभिनन्दितश्च भवदादेशः ।

**अविद्या**—अनेन वाक्येन त एव शमदमादयः, सैव च निवृत्तिरपि, कार्यं च तदेव, यन्मया शङ्कितमिति ज्ञायते ।

**प्रवृत्तिः**—अथकिम् । (*इति कामनाकथितमखिलं कथयति ।*)

---

'मन्ये शङ्के ध्रुवं प्रायो नूनमित्येवमादिभिः ।
उत्प्रेक्षा व्यज्यते शब्दैरिवशब्दोऽपि तादृशः ॥'

इति ॥८॥

ऊष्मणो विघट्टनेन चिरकालसंबन्धेन । तेन ऊष्मणाप्यधरस्य विघट्टनोक्त्या अत्यन्तमार्दवं सूचितम् । **बिम्बाधर इति** । बिम्बतुल्यतया स्थितेऽधरेत्यर्थः । **वीटीति** । सखीभिः स्वहस्ते समर्पिता स्वयं चाङ्गुष्ठतर्जनीयोगेन धृतापि व्यासङ्गात् न चर्विता अतः चिर अङ्गुष्ठतर्जन्यग्रयोगरूपया चिन्मुद्रया मुद्रिता उपलक्षिता वर्तत इत्यर्थः । चिरं चिन्मुद्रोपलक्षितत्वादेव **चित्रगतेव** इति शेषः । अत्रैकस्या एव वीट्याः चित्रगतत्ववैशिष्ट्येनोपमानत्वं नायिकाकराञ्चलवैशिष्ट्येन चोपमेयत्वं निबद्धमिति । 'स तद्दुकूलादविदूरमौलिर्बभौ पतद्गङ्ग इवोत्तमाङ्गे' इत्यादाविव विशिष्टोपमालङ्कारो बोध्यः । **विफलोद्यम इति** । नानोपायैः तत्कार्यपरिजनैः

**अविद्या**—अयि विषयवासने, स्थान एव खलु मे तर्कः। तत्किमत्र मन्यसे।

**विषयवासना**—सखि न भेतव्यम्। यत्किंचिदेतत्।

स्वाध्यायाध्ययनावबोधविहितानुष्ठाननिष्ठाक्रमैः
कान्तारे गिरिकन्दरे तृणपयोवृत्त्या च शुद्धान्तरः।
आरुह्य श्रवणादितुङ्गपदमभ्यास्तां निदिध्यासनात्
कं नस्योतमिवापकृष्य विषये बध्नामि कामादिभिः॥१०॥

---

प्रवर्तितापि स्वयमतिभूमिं गमितया चिन्तया न क्वापि श्रियत इति विफलोद्यम इत्यर्थः॥९॥

स्मृतिमात्र एव स्मरणे सत्येवेत्यर्थः। तत्रैव वेदारण्ये॥ अथकिम् इत्यङ्गीकार उक्तम्। भवदादेशः भवत्या आदेशः नियोगः। स्थान एवायमादेश इत्यभिनन्दित इति भावः॥ **अनेनेति** । अभिनन्दित इत्यनेनेत्यर्थः। तदेव नायिकान्तरासक्तिरूपम्। **इतीति**। उक्तेति शेषः॥ तर्कः—प्रथमाङ्के नूनमेषामित्यादि..........स्थाने युक्तः। **तत्किमिति** अत्र विषये किं प्रतिविधानं मन्यस इत्यर्थः॥ **यत्किंचिदेतत्**—अतितुच्छमित्यर्थः॥

ननु ब्रह्मचर्याश्रमे वेदानधीत्य मीमांसापरिशीलनेन तदर्थमवबुध्यते, ततो गृहस्थाश्रमे यथाशक्ति नित्यादिकर्माण्यनुष्ठाय, ततो वानप्रस्थाश्रमे पुण्यारण्यगिरिकन्दरादिषु कृच्छ्रचान्द्रायणादितपस्तप्त्वा, ततः संन्यासाश्रमे श्रवणादिकं विधायात्मसाक्षात्काररूपविद्यया कृतार्थस्स्यात्। तत्र त्वया किं प्रतिविधातुं शक्यमित्यत आह—**स्वाध्यायेति**। स्वस्य अध्यायः स्वाध्यायः। स्वपितृपितामहादिपरम्पराप्राप्तो वेदविशेषः तस्याध्ययनं गुरुमुखात् ग्रहणम्। तदर्थावबोधः। अवगतस्यानुष्ठानम्। एवं क्रमेणेत्यर्थः। अत्र 'स्वाध्यायोऽध्येतव्य' इति श्रुतिरेव प्रमाणम्। अस्याः श्रुतेरयमर्थः-अध्ययनविधि गृहीतवेदादर्थं बुद्ध्वा कर्माण्यनुतिष्ठेदिति कान्तारे दण्डकानैमिषारण्यादौ **गिरिकन्दर इति**। 'सर्व

(*विमृश्य* ।) हन्त, शमदमादिसंबन्धेन महोपनिषदुपदेशेन च कश्चिदविद्यामपहाय विद्यामधिगमिष्यति । तदहं क्व गमिष्यामि ।

प्रत्यक्षसिद्धमपलप्य गिरामभूमि—
मन्यत्सुखं किमिति हा रसिका गृणन्ति ।

अथवा—

श्रोता जनो यदि मिलेदतिमन्दबुद्धिः
किं किं न बोधयति वञ्चनकेलिलोलः ॥११॥

---

शिलोच्चया' इत्यादिशास्त्रादित्यर्थः। दण्डकाद्यरण्यकादीनां च तपस्थानत्वं पुराणेषु प्रसिद्धम्। तृणम् अतिलघुत्वात् शीर्णपर्णादिः। पयो वा वृत्तिःजीवनोपायः। 'अब्बक्षा वायुभक्षाश्चेति' प्रसिद्धेः। एवमनुष्ठितैः कर्मभिः, शुद्धचित्ते विविदिषायां च सत्यां वेदनसाधनश्रवणादिसंपाद्य निदिध्यासनेन सर्वोन्नतं पदं लभतामिति कामाचाराभ्यनुज्ञायां लोट्। स्वमहिम्ना तदेवंविधमपि पुरुषं नासिकास्यूतरज्जुं बलीवर्दमिव निर्यत्नमाकृष्य कामादिमुद्भाव्य विषयेषु यथापूर्वं पातयामि। विषयवासनायां सत्यां हि कीदृशोऽपि पुरुषो विषयासक्तो भवतीति प्रत्यक्षं सर्वेषाम् । अतः त्वया न भेतव्यमित्यभिप्रायः। अत्र स्वाध्यायाध्ययनेति ब्रह्मचर्यं सूचितम् । 'अष्टवर्षं ब्राह्मणमुपनयीत' 'तमध्यापयीत' 'उपनीय तु यः शिष्यं वेदमध्यापयेत् द्विजम्' 'उपनयनं विद्यार्थस्य श्रुतितः संस्कार' इत्यादिश्रुतिस्मृतिभिः ब्रह्मचर्यस्य वेदाध्ययनार्थत्वावगमात्। विहितानुष्ठानेत्यनेन गार्हस्थ्यम्। तत्रैव पत्नीसाहित्येनाग्निसाध्यभूयिष्ठकर्मानुष्ठानसंभवात्। कान्तार इत्यादिना वैखानसत्वम्। तत्रैवारण्यवासादियोगात्। आरुह्य श्रवणादीत्यनेन संन्यासः । तस्यैव 'ब्रह्मसंस्थोऽमृतत्वमेति' 'संन्यस्य श्रवणं कुर्यात्' इत्यादिभिः श्रवणादिनिष्ठसंभवादिति बोध्यम्। एवं मयि सति त्वया न भेतव्यमित्यर्थादुक्तम्। तदेवोपसंहारेण दर्शयति—**अत इति**। **व्यामोह**

मत्प्रसूतयोरसंभावनाविपरीतभावनयोः प्रभावं न कोऽपि विजानाति ।
किं बहुना—

वेदारण्यमुपैतु तत्र वियदालम्बा मृषावादिनो
ये तेषां च वचः श्रृणोतु मनुतां तथ्यं तदेव स्वयम् ।
मत्पृष्टं प्रतिवक्तु किंचन तनौ कीटादितोदे मना—
गुत्प्लुत्यैष कुतोऽनुधावति मृषाभूतं किलास्याखिलम् ॥१२॥

---

**इति** । परेषामिति शेषः । किं च परेषां वचनं बाधितार्थत्वादयुक्तमिति दर्शयति—**पुर्नारस्यादि** ॥

**प्रत्यक्षसिद्धमिति** । प्रत्यक्षतः सुखशरीरादिसाध्यत्वावगमात् । तदभावेऽपि सुखं भवति । तच्च न केनापि शब्देनोच्यत इति साहसिकाः विरुद्धं वदन्ति । तन्न युक्तमित्यर्थः ।

बोध्यस्य बुद्धिमाद्ये तदनुरोधेन विप्रलम्भकस्य विप्रतिषिद्धवचनमप्युपपन्नमेवेति विमृश्याह—**अथवेति** । अत्र 'नित्यं विज्ञानमानन्दं ब्रह्म' 'यदेष आकाशो न स्यात्' इत्युपनिषद्बोध्यम् । ब्रह्मरूपं सुखं 'यतो वाचो निवर्तन्ते । अप्राप्य मनसा सह' इति श्रुत्या वाङ्मनसोरगोचर इति सूचितम् अत्राक्षेपालङ्कारः—

'आक्षेपः स्वयमुक्तस्य प्रतिषेधो विचारणात् ।
चन्द्रसन्दर्शयात्मानमथवास्ति प्रियामुखम् ॥'

इति लक्षणोदाहरणे ॥११॥

तदेवं सर्वथापि मयैव परे जय्या इत्युक्तमिदानीं किंबहुनोक्तेन मत्कन्याभ्यामसम्भावना विपरीतभावनाभ्यामेव तत्पराभवः सुकर इति न मत्प्रयासापेक्षापीत्याह—**किं बहुनेति** ।

विपरीतभावनाप्रभावं स्थालीपुलाकन्यायेन प्रथमं दर्शयति—**वेदारण्यमिति**। तत्र वेदारण्ये विद्यमानाः शिवादयः। **वियदालम्बा इति**। पिशाचादिवदाकाशावलम्बना इत्यसूयया परिहासोक्तिः। वियत् यावान् वा अयमाकाशः तावानेषोऽन्तर्हृदय आकाशः 'आकाशस्तल्लिङ्गात्' 'आकाशोऽर्थान्तरत्वादिव्यपदेशात्' इत्यादि—श्रुतिसूत्रेष्वाकाशशब्देनोक्तं ब्रह्मविषयत्वेनावलम्बत इति। **वियदालम्ब इति**। 'कायाकाशयोः संबन्धसंयमात् लघुतूलसमापत्तेश्च आकाशगमनम्' इति योगसूत्रोक्तरीत्या काशाकाशसंबन्धनियमेन आकाशवशीकरणे सति तूलादितुल्यलघुतामापन्नाः आकाशे संचरन्ति योगिन इत्युक्ताकाशावलम्बिन इति वा कवेस्तात्पर्यम्। अत एवं 'शमदमप्रष्ठा महायोगिन' (द्वि० श्लो १) इति प्रागुक्तम्। मृषा अनृतं वदितुं शीलमेषां मृषावादिनः ताच्छील्ये णिनिः। अन्यत्र विश्वमिथ्यात्ववादिनः। **तदेवेति**। उपनिषदाद्युक्तमेवेत्यर्थः **मत्पृष्टमिति**। मत्प्रश्नमित्यर्थः। प्रतिवक्तु प्रत्युत्तरयुक्तं करोतु। प्रश्नमेवाह—**किंचन इत्यादि**। एतच्च 'तोद' इत्यनेन प्रतिवक्तीति पूर्वेण वा संबध्यते। यथा च किंचित्तोदे समुत्प्लुत्य कुतो नु धावतीति, किं च प्रतिवक्तीति वा अर्थः। अतिलघुनि मनाक् अत्यल्पेऽपीत्यर्थः। कीटादिभिस्तोदे व्यथायाः। उत्प्लुत्य उड्डीय। **कुत इति**। कस्मात् कारणादित्यर्थः। अतोऽसंभावनाविपरीतभावने एवावश्यकारणमिति ताभ्यां शमादिजयः सुकर इति भावः। तत्र सोत्प्रासं हेतुमाह—**मृषेति**। मिथ्यात्वं प्राप्तं शशशृङ्गादिकल्पमित्यर्थः। एवं च धावनकारणस्याभावेऽपि धावने व्याघात इत्याक्षेपे परेषां मूकतैवोचितेति वेदारण्यप्रवेशादिना अस्मत्परिभवोऽतितुर्लभ इति भावः ॥१२॥

एवं विपरीतनिश्चयेऽपि निश्चयविपरीतप्रवृत्तिकारिण्याः विपरीतभावनायाः प्रभावः केनापि लंघनीय इति काक्वा आह—**स एष इति**। **विपरीतेति**। इदमुपलक्षणम्। असंभावनाया इत्यपि द्रष्टव्यम्। अयमर्थोऽसंभावित इति बुद्धिरसंभावना। जगत् सत्यम्, सविशेषं ब्रह्म इत्यादिधीर्विपरीतभावना। इयता प्रबन्धसन्दर्भेण ब्रह्मनिष्ठामभ्युपेत्य दूषितम्। अधुना ब्रह्मनिष्ठैव गगनारविन्दसुन्दरीत्याह—**किं च मयोति**।

ननु अग्निरित्यादिना 'भस्म गृहीत्वा विमृज्याङ्गानि संस्पृशेत्। व्रतमेतत् पाशुपतं पशुपाशविमोक्षाय। तेषामेवैतां ब्रह्मविद्यां वदेत, शिरोव्रतं

स एष विपरीतभावनाप्रभावः केन वा जय्यः। किं च मयि प्रभवन्त्यामिह कस्यचित् ब्रह्मनिष्ठा का नाम।

**भस्मावगुण्ठननिमीलनमोहनीया येयं चकास्ति कुहचित्परमात्मनिष्ठा।**
**एषा शिवोऽहमिति किंचन शब्दमात्रमन्तर्न किंचिदपि न भ्रमितव्यमत्र।१३।**

---

विधिवत् यैस्तु चीर्णमत्याश्रमिभ्यः परमं पवित्रं प्रोवाच सम्यगृषिसंघजुष्टम्' इत्यादिश्रुतिषु पाशुपतव्रतशिरोव्रतात्याश्रमशब्दितस्य विभूतिधारणस्य ब्रह्मज्ञानद्वारा मुक्तिसाधनत्वावगमात् तादृशविभूतिधारणशीलस्याश्रमस्थः सकलेन्द्रियाणि निरुद्धय 'भक्त्या स्वगुरुं प्रणम्य' इति श्रुत्या निरुद्धसर्वेन्द्रियव्यापारस्य 'विविक्तदेशे च सुखासनस्थः शुचिः समग्रीवशिरःशरीर' इति श्रुत्युक्तातिरहस्यदेशविशेषनिष्ठस्य स्वाभिमतपद्मकस्वस्तिकाद्यन्यतमासनासीनस्य 'नासाग्रन्यस्तनयनः संवृतास्यः सुनिश्चलः।

ध्यायीत मनसा देवमुरोविष्टभ्य चाग्रतः॥ इत्यादिशास्त्रोक्तसकलाङ्गसंयमसचिवस्य पुरुषधौरेयस्य 'ओमित्येवं ध्यायथ' 'आत्मानं तमेवैकं जानथ' आत्मानमन्या वाचो विमुञ्चथ' 'ध्यायीतेशानम् प्रध्यायितव्यम् इत्युपक्रम्य कारणं तु ध्येयः' 'सर्वैश्वर्यसंपन्नः सर्वेश्वरः शम्भुराकाशमध्य' इत्यादिशास्त्रोक्तप्रकारेण ब्रह्मनिष्ठा संभवन्त्येवेत्याशङ्क्याह भस्मेति। भस्मना सितेन अवकुण्ठनमार्द्रीकृत्य सर्वाङ्गेष्वालेपनम्। निमीलनम् अक्ष्णोः ताभ्यां लोहनीया। कुहचित् विविक्तदेशे, पुरुषविशेषे वा तथा च प्रागुक्तरीत्या मन्दमतिव्यामोहेन—

'सर्वे ब्रह्म वदिष्यन्ति संप्राप्ते तु कलौ युगे।
नानुतिष्ठन्ति मैत्रेय शिश्नोदरपरायणाः॥'

इति विष्णुपुराणाद्युक्तरीत्यान्तस्सारशून्यं शिवोऽहमिति शब्दोच्चारणम् तदपि भक्त्यभावात्—

'सदा जपवटो हस्ते मध्ये मध्येऽक्षिमीलनम्।
सर्वं ब्रह्मेति वादश्च सद्यः प्रत्ययहेतवः॥'

अयि भट्टिनि, प्रवृत्तिर्नाम किमियं साधारणीति मन्यसे । निवृत्त्या वशीकृतमपि बलादियमपकर्षत्येव । पश्य तावत् ।

**आयुर्भूरि गतं पतन्ति सुदृशस्तुच्छैरलं व्यापृतै—**
**र्भूतं भावि यथा तथाऽस्त्विति भृशं शम्भोस्सपर्याविधौ ।**
**संनद्धोऽपि समाधिनिष्ठहृदयोऽप्युत्सृज्य सर्वं निज—**
**व्यापारे समयातिपत्तिचकितः कृष्टोऽनया धावति ॥१४॥**

---

इति,

'अग्निहोत्रं त्रयो वेदाः भस्मरुद्राक्षधारणम् ।
बुद्धिपौरुषहीनानां जीविकेति बृहस्पतिः ॥'

इत्युक्तरीत्या कथंचित् स्वात्मनि सद्यः प्रत्ययाधानेन विषयलम्पटानां मूर्खाणां जीवनार्थवेषमात्रं सर्वमिदमिति सुष्ठूक्तम् का नाम ब्रह्मनिष्ठतेति ॥१३॥

आस्तामस्मदीयः प्रभावः । परं बलमखिलमुन्मूलयितुं इत्याह—**अयि देवीति** । काचिदबला अस्मदीया प्रवृत्तिर्नामेति स्त्रीत्वेन लोकसाधारणीति मन्यसे । किं न तथा, किन्त्वनन्यसाधारण—सामर्थ्यसेवधिरिति तदसाधारण कार्यविशेष प्रदर्शनेननिदर्शयति—**निवृत्त्येति** ॥

**आयुरिति** । जात्यभिप्रायमेकवचनम् । **भूरिति** । बहुत्वावच्छिन्नम्, स्वस्य बहूनि वयांसि गलितानि इति यावत् । तुच्छैः स्थायिफलशून्यत्वात् । व्यापृतैः भावे निष्ठाव्यापारैरित्यर्थः । **यथा तथेति** । किं नः छिन्नमिति भावः । **इतीति** । एवं निश्चयेन विरज्येति शेषः । सपर्या पूजा । उत्सृज्य पूजां निष्ठां तत्परिकरं च सर्वमित्यर्थः । **निजेति** । यथापूर्वं स्वीयलौकिकव्यापार इत्यर्थः । अनया व्यावृत्त्या ॥१४॥

एवं च तव भयस्य न क्वापि प्रसक्तिरित्युपसंहरन्नाह—**तदिति** । **एवमिति** । उक्तप्रकारेण । भवदभ्युदये तव श्रेयसि । एकतानः निरतः । भावः चित्तवृत्तिर्ययोरित्यर्थः । न केवलमावामेव । किन्तु दुरतिक्रमपराक्रमशालिनः

तदेवमपरिमेयप्रभावयोरावयोरनवरतमपि भवदभ्युदयैकतानभावयोः सत्योः किं नाम भवदभिमतमापाद्येत । अपि च कुटिलकरालकर्मगहनैरतिदुर्वारैर्मोहादिभिरस्मदीयपरिवारैरनवरुद्धतया परिमितोऽपि न खलु कश्चिद्देशः कालो वा । अतस्तानतीत्य वेदारण्यप्रवेशोऽतिदुर्घट एव । प्रविष्टोऽपि काम्याभिः क्रियाभिः उपसनाभिश्च बलादाकृष्यत एव ।

**प्रवृत्तिः**—अयि भट्टिनि, किंचिदहं विज्ञापयामि ।

**विलासिनीनां पुरुषप्रतीपतारसानुविद्धा यदि शोभते परम् ।**
**यदि स्म सा भग्नरसा कृतव्यथा तदेव तासां गरिमव्यपोहनम् ॥१५॥**

अतो विमुखोऽपि विप्रियकार्येऽपि मन्युवेगमन्तरेव निगृह्य विनयेन

---

अस्मत्परिवाराः कामादयः सर्वत्र सर्वदा संनिहिता इति तदतिलंघनेन वेदारण्यप्रवेशो दुर्लभ एव । अस्तु वा प्रवेशस्तत्र काम्यक्रियोपासनाभिराक्रम्यत एवेति किंचित्तथेत्याह—**अपि चेति** । कुटिलानि अनर्थफलानि । अतएव करालानि क्रूराणि । कर्माणि तैः गमनाः दुराधर्षाः । अनवरुद्धतया अनाक्रान्ततया । परिमितोऽपि स्वल्पोऽपि । सर्वस्मिन्नपि देशे काले च कामक्रोधादयः सन्त्येवेति भावः । **प्रविष्टोऽपीति** । पुरुष इति शेषः ॥

आस्तां पराक्रमकथानुक्रमणम् । सर्वथा स्त्रीणां पुरुषानुरञ्जनमेव सकलपुरुषार्थसाधनमिति तदवश्यकर्तव्यमित्याह—**अयि देवीति** ॥

**शोभत इति** । विप्रलम्भशृङ्गारे प्रागल्भ्येन तात्कालिकिंचिद्विपरीतताया ईर्ष्या प्रणयकलहादिरूपाया रसानुगुणत्वादिति भावः । सा विपरीतता । अतिभूमिं गततया रसभङ्गेन केवलं व्यथाकारिणी चेत् तदेव विपरीतत्वमेव । तासाम् विलासिनाम् । गरिम्णः गौरवस्य **व्यपोहम्** निरासकम् । अतिविप्रतिकृता हि पुरुषाः महताग्रहेण 'सद्यस्त्वप्रियवादिनीम्' इति नीतिशास्त्रानुसारेण भार्यामपि त्यजन्तीति भावः ॥१५॥

चातुर्येण च राजायमनुरञ्जनीयः। अपि च य एष चित्तशर्मा राजनर्मसखः, सर्वमेतस्मिन् प्रतिष्ठितम् । अतोऽयमुपचारैरनुपदमपि विधेयीकरणीयः । आवामपि समुचितेषु केषुचिदर्थेषु व्याप्रियावहे ।

*(इति निष्क्रान्ताः सर्वे ।)*

*द्वितीयोऽङ्कः*

---

विमुखः पराङ्मुखः। त्वयीति शेषः। विप्रियम् विरुद्धं कर्तुं शील-मस्येति विप्रियकारी । मन्युवेगम् मन्युः कोपः । निगृह्य नियम्य । राजैव केवलं नानुरञ्जनीयः। किन्तु तन्नर्मसचिवश्चित्तशर्मापीत्याह—**अपि चेति। सर्वमिति।** अनेनानुरञ्जने हेतुरुक्तः। उपचारैरभिमतप्रदानादिभिर्वशीकार्य इत्यर्थः ।।

***द्वितीयोऽङ्कः***

———

## तृतीयोऽङ्कः

(ततः प्रविशति निवृत्तिः ।)

**निवृत्तिः**—'अत्रभवत्याः शिवभक्तेः वचसि विस्रम्भेण जीवराजस्य विद्याप्रतिकृतिं दर्शयिष्यामि' इति कथितवत्यस्मि । तत्किमद्यापि सा न प्रेषिता ।

(ततः प्रविशति चित्रपटहस्ता विरक्तिः ।)

**विरक्तिः**—आज्ञप्तास्मि शिवभक्त्या—'चित्रपटोऽयं निवृत्तिहस्ते दातव्यः' इति । तत् क्व सा निवृत्तिर्भवेत् । (*अग्रतोऽवलोक्य ।*) कथमियं निवृत्तिः । येषा

**समीरणे वाति तृणेऽपि वा चलत्यवेक्षमाणा परितो दिगन्तरम् ।**
**जनस्य कस्यापि चिरप्रतीक्षया मनोऽतिरुद्धं दधती समीक्ष्यते ॥१॥**

---

एवं प्रथमाङ्कवर्णितभक्त्युत्साहरूपबीजस्य द्वितीयाङ्के विरोधिव्यापारवर्णनेन विच्छेदं दर्शयित्वा तदवच्छेदाय तृतीयाङ्के बिन्दुं प्रदर्शयिष्यन् प्रथमं तदर्थस्य संग्रहेण सूचनाय यथोक्तलक्षणप्रवेशकाख्यमर्थोपक्षेपकमारचयति—**तत इति** ॥

**अत्रभवत्या इति** । पूज्याया इत्यर्थः । **वचसीति** । त्वं जीवराजमुपेहि समारब्धतत्कार्यनिर्वाहायाहमपि विलिखितविद्याप्रतिकृतिकं चित्रपटं तव

यावदस्या हस्तं चित्रपटं प्रापयामि । (*इति परिक्रामति ।*)

**निवृत्तिः**—(*विरक्तिमवलोक्य ।*) सखि, क्व प्रस्थितासि ।

**विरक्तिः**--सखि, भगवत्या भवदन्तिकमनुप्रेषिता अस्मि । (*इति चित्रपटमर्पयति ।*)

**निवृत्तिः**—(*चित्रपटं निर्वर्ण्य ।*) अहो प्रतिकृतेरभिरूपता ।

एतद्वाङ्मनसातिवर्ति महितं रूपं बतेयत्तया
चित्तेनोल्लिखितं कथं विलिखितं हस्तेन वा तत्कथम् ।

अथ वा न चित्रकारनैपुणमेतत् ।

अप्रज्ञेयमहाप्रभावमहसो भक्तेरियं प्रायशो
भक्तत्राणगरीयसी विरचना नूनं भवेन्मानसी ॥२॥

सखि विरक्ते, संप्रति किमाचारो जीवराज इति किमवगम्यते ।

**विरक्तिः**—चित्तशर्मणा वयस्येन श्रृङ्गारवने माधवीमण्डपम् अधिवसति महाराज इति श्रुतम् ।

**निवृत्तिः** तर्हि अयमेवावसरः तदुपसरणाय ।

(*इति निष्क्रान्ते ।*)

***प्रवेशकः ।***

---

प्रेषयिष्यामि । तं तस्मै प्रदर्शय इत्येवंरूप इत्यर्थः । तेन द्वितीयाङ्केन विच्छिन्नस्य भक्त्युत्साहरूपस्य बीजस्याविच्छेदाय पुनरनुकर्षणात् 'विच्छेदेऽर्थान्तरैस्तस्य बन्दुरच्छेदकारणम्' इत्युक्तो बिन्दुर्निवेशितः । **किं** कुतः ॥

**समीरण इत्यादि**। प्रायेण चिन्तातरलितानां वृत्तिः एवंविधेति स्वभावोक्तिः रूक्षं नीरसम् ॥१॥

अभिरूपता सौन्दर्यम् ॥ महितं पूज्यम् । तत् रूपम् । **कथमिति** । केनापि सर्वथा नोल्लिखितम् नापि विलिखितुं शक्यमित्यर्थः ।

(ततः प्रविशति यथानिर्दिष्टः सचिन्तो राजा ।)

**राजा**—सखे चित्तशर्मन्, अत्रभवत्या निवृत्त्या रहस्यावेदनात् प्रतिनिकाममस्वस्थहृदयो भवामि । तथाहि ।

हृद्यं वस्तु न रोचते हृदयजस्तापो न विश्राम्यति
श्वासः प्लोषयतेऽधरं शिथिलयत्यङ्गानि चिन्ता मम ।

---

यदि चित्रकारो विलिखेत् भवेदशक्तता, किन्तु महानुभावा शिवभक्तिरेव मनसा स्वयं निर्मम इत्याह—**अथवेति** । **भक्तेति** । भक्तानां त्राणे गरीयसीत्यर्थः ।।२।। **किमिति** । क आचारो यस्य किमाचारः । इदानीं किमाचरतीत्यर्थः **तर्हीति** । अविद्यातत्परिवारसंनिधानाभावात् अस्माकमयमेव चित्रपटप्रदर्शनसमय इति भावः ।। **प्रवेशकः** ।।

**तत इति** । प्राक् प्रथमाङ्के 'अपि नाम जातु ममैतदुपपद्येत' इति जीवराजस्य विद्याविषयकचिन्तासूचनात्, अत्र च विष्कम्भे चित्तशर्मणा शृङ्गारवने विविक्तमध्यास्त इति तदवस्थस्य सूचनात् सचिन्तः प्रविशतीत्यर्थः ।।

**रहस्यावेदनादिति** 'कार्तिक्याः प्रभृति' इति भाष्ये प्रयोगात् प्रभृतिशब्दप्रयोगे पञ्चमी ।।

श्वासः अन्ततापातिशयादूष्मलः । **शिथिलयतीति** । उक्तप्रकारेणेत्यर्थः । **ममेति** । रोचत इत्यत्र मह्यमिति विभक्तिपरिणामेन योजनीयम् । 'रुच्यर्थानां प्रीयमाण' इति संप्रदानत्वात् । अथवा विवक्षाया बलीयस्त्वात् शेषत्वे षष्ठ्येव निमिषः अक्षिपक्ष्मपरिस्पन्दरिच्छिन्नः कालः **तमिमम्मिति** । उक्तनानाविधक्लेशकारिणमित्यर्थः । कथम् केन प्रकारेण ।।३।।

**यत्न इति** । तेन 'यत्नस्स्यात्तस्य संप्राप्तेः प्रवर्तनमुपायत' इत्युक्तलक्षणो यत्नः सूचितः । अत्र 'लक्ष्यालक्ष्यस्तदुद्भेदो यत्र प्रतिमुखं हि तत्' । यत्र बिन्दु-

मोहे मज्जति चेतनापि निमिषः कल्पादनल्पायते
कस्मै किं कथयेय हन्त तमिमं कालं क्षिपेयं कथम् ॥३॥

**चित्तशर्मा**—वयस्य, किं केवलेन विषादेन। विधीयतां तदुचितो यत्नः।

**राजा**—तमेव खलु न प्रतिपद्ये।

**चित्तशर्मा**—वयस्य' सोऽपि हृदयंगम एव उपनमितो दैवेन।

**राजा**—कथय कथय।

**चित्तशर्मा**—

'वेदारण्यनिवासिनः कतिपये दृष्टा मया तापसाः
प्रागेकत्र शमादयः समुदितास्ते मामवोचन्निदम्।
जीवस्यास्य विभोश्चिरादिह सुखे दुःखेऽनु भोक्ता भवान्
यस्य श्रेयसि कोऽपि कश्चिदिव किं ताटस्थ्यमालम्बते ॥४॥

---

प्रयत्नसंबन्धरूपसन्धौ तस्य बीजस्य उद्भेदः लक्ष्यश्चालक्ष्यश्च भवति। क्वचित् यत्नैर्लक्ष्यः 'क्वचिदन्तरायैरलक्ष्यश्च सः प्रतिमुखसन्धिरित्यर्थः। इत्येवंरूपप्रतिमुखसन्धिः। तत्र उत्साहबीजस्य 'भक्तत्राणगरीयसी' त्यनेन चित्रपटप्रेषणेन च किंचित् लक्ष्यत्वं वक्ष्यमाणवेदारण्यवृत्तान्ते चित्तशर्मवैमुख्येनालक्ष्यत्वं चेति बोध्यम्। अस्य च सन्धेरङ्गानि—

'विलासः परिसर्पश्च विधूतं शमनर्मणी।
नर्मद्युतिः प्रगमनं निरोधः पर्युपासनम्॥
वज्रं पुष्पमुपन्यासो वर्णसंहार इत्यपि॥
इति त्रयोदशाम्नातानि।

तत्र कथय कथय इत्यनेन 'रत्यर्थेहाविलासस्स्यात्' इत्युक्तो विलासः प्रवेशके दर्शितः॥ सोऽपि उचितापायोऽपि उपनमितः प्रापितः। **कोऽपि कश्चिदिवेति**। लौकिकव्यवहारानुकरणम् अपरिचित इवेति भावः। ताटस्थ्यम् औदासीन्यम् ॥४॥

इति । तदनु भो महाभागाः, सांप्रतम् अस्माकमिह किं नाम सुखं हीयते ।

जीवः सुखात्मा विभुरेष राजा प्रधानभूतोऽहममुष्य विष्वङ् ।
भोगाः समग्रा विषयेषु मत्तस्तटस्थता का मम तत्सुखेषु ॥५॥

तथा हि ।

इत्थं कदा कुत्र किं नाम सुखं नानुभूयत इति मयाभिहिते, हन्त कारणस्वभावकृत एष ते व्यामोहः । यदेवं ब्रवीषि । शृणु तावत् ।

उद्यानोदरपद्मिनीपरिसरे पर्यन्तयन्त्रोच्चल-
च्चन्द्रोशीरसुगन्धिशीकरभरस्फायत्समीराङ्कुरे ।
पीतस्वादुरसायनादिसुहितैरस्माभिरस्तव्यथै-
र्नीयन्ते हि सुखैकतानविसरा वासन्तिका वासराः ॥६॥

---

एवं तापसानां वचनमनूद्य तान् प्रति स्वोक्तमनुवदति—**तदनु इति** । **हीयते** न्यूनं भवतीत्यर्थः । तेन विद्याधिगमे चित्तशर्मणः प्रत्ययाभावदर्शनात् 'विधूतमर्थंविद्वेष' इत्युक्तं विधूतं निबद्धम् । प्रधानभूतः प्रकृतिष्विति शेषः । विष्वङ् सर्वकार्येषु मत्तः । ५॥

भोगाः समग्रा इत्युक्तं कतिपयविषयभोगोपन्यसेन विशदयति **तथाहीति** ॥ पर्यन्ते यानि धारायन्त्राणि तेभ्य उच्चलन्तः कर्पूरवीरणादिगन्धबन्धुराः ये जलकणाः तद्भारेण निबिडीभवन् यः समीरशावकः तद्वति उद्यानपद्मिनी-परिसरे स्थित्वा स्वादूनि दिव्यरसायनानि आस्वाद्य मुदिततया दूरीकृतदुःखै-रस्माभिः सुखप्रायप्रसराः वासन्तिकावासरा नीयन्त इत्यर्थः । इदमुपलक्षणम् सर्वं दैवमेवेति ॥६॥

स्वोक्तमुपसंहरति **इत्थमिति** । तदनु तापसैः कृतं स्वोक्तार्थे वैषयिकसुखे दोषोद्भावनामलौकिकसुखोपन्यासं च क्रमेण दर्शयति **हन्तेति** । कारणे अविद्याकृत इत्यर्थः । 'कारणगुणा हि कार्यगुणनारम्भत' इति न्यायादिति भावः ॥

देहो भूतसमष्टिरत्र तपनाधिक्ये जलं क्षीयते
तर्षो नाम स एष तस्य समता तृप्तिः पुनर्वारिणा ।
एकस्योपचये भवत्यपचयोऽन्यस्य स्वभावस्त्वयं
भूतानां समता पुनश्च किमिह प्रत्येपि तत्वं सुखम् ।।७।

अद्वैतं यदनादिमध्यनिधनं सत्यैकरूपं सुखं
तत्र त्वामुषितं मृषायितमिवाविद्याविलासैर्निजैः ।
विश्वं दर्शयते यथार्थवदिदं स्वप्नेन्द्रजालोपमं
धीरः कः पुनराद्रियेत तदिहासत्ये प्रपञ्चे सुखम् ।।८।।

किं च ।

रूपं नाम विशिष्टवस्त्विति पृथग्यद्यत्समालक्ष्यते
सर्वं चास्थिरमव्यवस्थितमनिर्वाच्यं च संमर्शने

---

भूतानां पृथिव्यादीनाम्, समष्ठिः संघात. । देहो नाम तपनसा तेजसः तर्षः पिपासा नाम तस्य तेजसः जलसेकेनोत्कर्षापकर्षपरित्यागेन साम्यावस्थान । तृप्तिर्नाम इति विषयविशेषे प्रदर्शितमर्थं सामान्येन भूतपञ्चकसाधारण्येनोपसंहरति **एकस्येति** । कदाचित् कस्यचिदुपचयः अपचयः साम्यं वा भवतीति निन्तरदुःखानुविद्धत्वात् क्षयिष्णुत्वाच्च वैषयिकं सुखं न सुखमिति निष्कर्षः ।।७।।

अनादिमध्यनिधनम् उत्पत्तिस्थितिध्वंसरहितम् । एकरूपम् उत्कर्षापकर्षरहितम् । मृषायितमिव मिथ्याभूतमिव । मुषितम् अपह्नुतम् । अविद्या खलु स्वमहिम्ना शुक्तिरज्ज्वादिषु शुक्तिरज्वादिकमाच्छाद्य तद्विपरीतं रजतादिकं दर्शयति तद्वन्नित्यं सुखं प्रच्छाद्य अनित्यं विषयोपभोगादिजन्यं सुखाभासं सुखत्वेन बोधयति । प्रत्युत यत्स्वप्नेन्द्रजालोपमं बिश्वं तत्सत्यमिति बोधयतीत्यर्थः । अविद्यया यत्तत्सदत्तदसदिति यदसत्तत्सदिति च बोध्यत इति स्वप्नादिषु प्रसिद्धमित्यर्थः ।।८।।

**मन्त्री त्वं कियतश्चिरस्य वपुषि व्यस्ते तदास्ते क्व ते**
**शत्रुं कश्चिदवैति मित्रमपरः पुत्रं कुतस्त्वां परः ॥६॥**

---

तस्मात् धीरः बुद्धिमान् 'कश्चिद्धीरः प्रत्यगात्मानमैक्षत' तदावृत्तचक्षुरमृतत्वमिच्छन्' 'तमेव धीरो विज्ञाय' इत्युक्तधैर्यगुणयुक्तः न केवलं सुखाभासे सुखत्वभ्रममात्रम्। किन्तु नामरूपादिविशिष्टप्रपञ्चप्रत्ययः सर्वोऽपि तव भ्रम एवेत्याह **किं चेति** ॥

रूपम् स्वरूपम्। नाम घटः पट इत्यादि। **विशिष्टवस्त्विति इति**। गन्धगुणविशिष्टा पृथिवी, शीतस्पर्शगुणविशिष्टा आप इत्यादि। तत्तदसाधारणधर्मविशिष्टं वस्तु पदार्थं इत्यर्थः। तदेव परस्परविरुद्धधर्माश्रयत्वेन मिथो विलक्षणं यद्यद्भाति तत्सर्वम् अस्थिरम् क्षयिष्णु। 'जातस्य हि ध्रुवो मृत्युः' इति न्यायात् इति भावः। अव्यवस्थितम् यत् कस्यचिदुपादेयम् तदन्यस्य हेयम्, यच्च हेयम् तदुपादेयम्। एवमाम्रफलादिकमेकं वस्तु यदैव पक्वं तदैवोपादेयम्। न प्राक्, पश्चाद्वा। तथा यद्गुणयुक्तं वस्तु येन पुरुषेणोपादीयते तादृशमेव तेनैव कालान्तरे हास्यत इत्येवं स्वरूपतो गुणतो वा पुरुषभेदेन कालभेदेन पुरुषाभेदेऽपि कालभेदेन चाव्यवस्थितमित्यर्थः। **अनिर्वाच्यमिति**। प्रपञ्चो न सन् 'नेह नानास्ति किंचन' 'अथात आदेशो नेति नेति आत्मेति' 'अतोऽन्यदार्तम्' इत्यादिश्रुतिभिर्बाध्यमानत्वात्। नाप्यसन् प्रतीयमानत्वात्। किन्तु अनिर्वचनीयमुक्तप्रकारेण सत्त्वासत्त्वाभ्यां निर्वक्तुमशक्यम् मिथ्याभूतं मिथ्यात्वं च सर्वप्रपञ्चाधिष्ठाने ब्रह्मणि प्रपञ्चस्य त्रैकालिकनिषेधप्रतियोगित्वमित्यादि बोध्यम्। यथा चेत्तत्तथा बहुधा पराक्रान्तभाष्यकारप्रभृतिभिरिति नात्र विचार्यते। उक्तरूपमव्यवस्थित प्रकारं तैः स्वस्मिन्नेव निर्दर्शितमनुवदति **मन्त्रीति**। त्वं खलु जीवराजस्य सदा सर्वविधराजकार्यधुर्यत्वादसाधारणः सचिवः तव तत्सचिवत्वं पञ्चभूतसंनिपातरूपे वपुषि पृथक्कृतेषु भूतेषु कस्मिन् भूते वर्तते। करचरादि धर्मिणि वा वपुषु पृथक्कृते करे चरणे वा कुत्र वर्तत इति भावः। एवं शत्रुमित्रपुत्रपित्रादित्वमपीत्यर्थः। सर्वस्यास्य व्यवहारस्य शरीरविषयत्वादिति भावः।।६॥

तदेवमसारभूते जगति सारभूतं सुखं किं नाम ।

पिष्टरसामृतसदृशं वैषयिकं तत्सुखं सुखं नैव ।
आधिव्याधिजराभिर्दुर्लभमेतच्च काकमांसमिव ॥१०॥

अतः 'सुखमस्माभिरनुभूयत' इति तव भ्रम एव । भूयोऽपि निदर्शयामः केषु भावेषु कया वृत्त्या किं नाम भवता सुखमन्वभूयत ।

---

**भ्रम एवेति** । अध्यास इत्यर्थः । अध्यासो नाम अतस्मिन् तद्बुद्धिरिति । भाष्ये उक्तमर्थं दृढीकर्तुं पुनरपि किंचिद्विषयविशेषमनूद्य तस्यातिहेयत्वमनुभवसिद्धं दर्शयति **भूयोऽपीति** । भवन्तीति भावः । कार्याणि वृत्त्या नृतानृताभ्यां वर्तेत । मृतेन प्रमृतेन वा याजनाध्यापनप्रतिग्रहैः ब्राह्मणो धनमार्जयेत् इत्यादि धर्मशास्त्रोक्तवृत्तिषु कया वृत्त्या न कयापीत्यर्थः ।

एवं सामान्यतः प्रतिज्ञातं तत्तद्वृत्तिविशेषानुपन्यस्य दूषयन् प्रपञ्चयति **याञ्चेति** । याञ्च्या दैन्यम् तेन कदर्थिता जुगुप्सिता विप्राणां वृत्तिः अत्यन्तलाघवापादकत्वात् शोच्या । 'मृतं तु याचितं भैक्षम्' इति याचितस्य मनुना मृतत्वाभिधानेन निन्दितत्वात् । वृत्तीनां मृतामृतादिव्यवहारो हि संज्ञानुरूपदोषतारतम्यप्रतिपत्त्यर्थम् इति तद्व्याख्यातारः । तेन ब्राह्मणजीवनम् अतिकष्टम् । ततश्च तस्य सुखं दूरापास्तमिति भावः । यद्यपि 'याजनाध्यापन प्रतिग्रहै ब्राह्मणो धनमार्जयेत् इति ब्राह्मणस्य द्रव्यार्जने वृत्त्यन्तराण्यपि सन्ति । तथापि सर्वेषामपि तेषां बहुविधशरीरायाससाध्यत्वेन निरन्तरं तदेकतानत्वेति क्लिष्टत्वस्य स्पष्टत्वादिति भावः क्षुद्रं यदा युद्ध जीवनक्षेत्रवृत्तिस्तस्याः प्रायेण शत्रुंजयप्रधानत्वात् शिव शिवेति लोकरीत्या अत्यन्तखेदद्योतनं हरि हरि हतादरतया इतिवत् । एतेन राज्ञो वृत्तिरतिक्लिष्टेति सूचितम् । राजवृत्तौ धर्मेण राज्यकरणेऽपि न सुखाभावमात्रम् किन्तु 'राज्यान्तं नरकं ध्रुवम्' इति पारलौकिकसुखमपि दुर्लभम् । अत एव श्रीरामचन्द्रयुधिष्ठिरादीनां महाभारतादिषु राज्यान्ते यमलोक प्रवेशो वर्णित

याच्ञादैन्यकदर्थिता द्विजनुषां शोच्यैव वृत्तिस्त्वसा-
वस्वायत्तविधेयगौरवसुखा सेवा हि दुर्जीविका।
शैलारण्यसमुद्रयानवहनक्लेशादि वा वर्ततां
क्षुद्रं यत्क्षुरजीवनं शिव शिव स्मर्येत तत्किं जनैः ॥११॥

तदेवम् अतिजुगुप्सितोऽयम् अविद्याविलासः। श्रूयतामस्या जगतस्तत्त्वम्।

---

इति भावः। **शैलेति**। कानिचित् वस्तूनि क्रेतुं विक्रेतुं वा वैश्यानामतिदुरासदशैलारण्यसमुद्रादिगमनं तत्तद्वस्तुवहनं च तत्प्रभवक्लेशायासादि वर्तताम् न कथनीयमित्यर्थः। तथाविधतत्क्लेशस्य वाङ्मनसातिवर्तितया तत्स्मरणमप्ययुक्तमिति भावः 'कृषिगोरक्षवाणिज्यं वैश्यं कर्म स्वभावजम्' इति गीतासु वैश्यस्य यद्वाणिज्यं विहितं तदप्यतिक्लिष्टमिति भावः। **सेवेति**। सेवा नाम चेतनादिना आत्मनः पराधीनत्वकरणम्। सेयं शूद्रस्य वृत्तिः शुश्रूषा। शूद्रस्येतरेषां वर्णानां'परिचर्यात्मकं कर्म शूद्रस्यापि स्वभावजम्' इत्यादिस्मृतिषु तथा प्रसिद्धेः। तां दूषयति **अस्वायत्तेति**। सेवकस्य महदल्पं लौकिकं वैदिकं वा यद्विधेयं कर्तव्यं कर्म तस्य यद्गौरवं फलतः उत्कर्षतः तेन यत्सुखं तत्स्वायत्तं न भवतीति सेवकानामनुभवसिद्धम्। तेन 'जीवन्तोऽपि मृताः पञ्च प्रवासी नित्यसेवक' इति नित्य सेवकस्य मृतप्रायत्वाभिधानात् 'सेवा श्ववृत्तिराख्याता तस्मात्तां परिवर्जयेत्' इति मनुना सेवाया श्ववृत्तित्वव्यपदेशेन निन्दितत्वाच्च शूद्रवृत्तिरतिक्लिष्टेति सूचितम् ।११॥

एवं स्थित्युपलक्षितं प्रपञ्चं दूषयित्वा संप्रति जन्मप्रभृति क्लिष्टत्वं दर्शयति **श्रूयतामिति**।

**ब्राह्ममिति**। 'एष देवपथो ब्रह्मपथ एतेन प्रतिपद्यमाना इमं मानवमावर्तं नावर्तन्ते। 'ते ब्रह्मलोके तु परान्तकाले परामृता परिमुच्यन्ति सर्वे' ब्रह्मणा सह ते सर्वे संप्राप्ते प्रतिसंचरे। परस्यान्ते

ब्राह्मं तत्पदमर्चिरादिभिरितो धन्यस्तु नावर्तते
यो धूमादिपथं स्वरेति स यथायातं परावर्तते ।
आवृत्तः स तु लिङ्गदेहघटितो बोधादिशून्यश्चिरं
तिष्ठेत् व्रीहियवास्तिला इति जनिप्रारम्भकाभावतः ॥१२॥

तदनु—

---

कृतात्मानः प्रविशन्ति परंपदम् ।' इति श्रुतिस्मृतिभिरुपासकस्यार्चिरादे देवयानमार्गेण कार्यं ब्रह्मप्राप्तस्य पुनरावृत्तिसाहित्यश्रवणादिति भावः । इतः प्राप्तः । इण् गतौ क्तः । अचिरादीत्यादिशब्देन 'तेऽर्चिषमभिभवन्त्यर्चिषो हरन् ह आपूर्यमाणपक्षमपूर्यमाणपक्षाद्यान् षडुदङ्ङेति मासांस्तान् मासेभ्यः संवत्सरं संवत्सरादादित्यमादित्याच्चन्द्रमसं चन्द्रमसो विद्युतं तत्पुरुषो मानवः स एनान् ब्रह्म गमयति' इति छान्दोग्यश्रुत्युक्तानि देवयानमार्गपर्वाण्यहरादीनि 'स एतं देवयानं पन्थानमासाद्याग्निलोकमागच्छति स वायुलोकं स वरुणलोकं स इन्द्रलोकं स प्रजापतिलोकं स ब्रह्मलोकम्' इति कौषीतकीश्रुत्युक्तं वाय्वादिकमपि गृह्यते । तदेतत्सर्वम् 'अर्चिरादिना तत्प्रथितेः' 'वायुमब्दादविशेषविशेषाभ्याम्' 'तटितोऽधिवरुणसंबन्धात्' इत्यधिकरणत्रयेण व्यवस्थापितम् । तत्र हि प्रथमेऽधिकरणे शाखाभेदेनाम्नातान्यर्चिरादिपर्वाणि 'स एतैरेव रश्मिभिरूर्ध्व इति तेऽर्चिषम् इति च रश्म्यर्चिरूपक्रमाणि विकल्पन्त इति पूर्वपक्षं कृत्वा क्वचित् किंचिद्विशेषमात्रमुच्यते, न तावता भेद इति सर्वासु शाखासु मार्ग एक एवेत्युक्तम् । द्वितीये तु 'स वायुलोकम्' इति कौषीतक्याम्नातो वायुः संवत्सरादुपरि निवेश्यः । पाठक्रमादर्थक्रमस्य श्रुतिक्रमस्य वा बलीयस्त्वादित्युक्तम् । तृतीये स वरुणलोकं स इन्द्रलोकं स प्रजापतिलोकमिति वरुणेन्द्रप्रजापतयः विद्युत उपरि निवेशनीयाः । 'अन्ते तु बादरायणात्' इति न्यायात् इति । तदनन्तरमर्चिरादिशब्दोक्तानामग्न्यादीनां मार्गचिह्नत्वं भोगभूमित्वं वाऽस्त्वित्याशङ्क्य आतिवाहिका नेतारः, स एतान् ब्रह्म गमयतीत्यमानवपुरुषस्य गमयितृत्वरूपाल्लिङ्गात् इति 'आतिवाहिकास्तल्लिङ्गात्' इत्यधिकरणे

काले क्वापि कुहापि कोऽपि यदि तानश्नाति तद्रेतसा
ब्रह्मक्षत्रपुरोगमेषु भजते पुण्यानुरूपं जनुः ।
व्यावृत्ताः पितृलोकतोऽनधिगतस्वर्गास्तु ये पापिनः
श्वानः सूकरपुल्कसा इति जनुः कालेन गच्छन्ति ते ॥१३॥

---

व्युत्पादितम् । अत्र श्लोकेऽर्चिरादिमार्गं प्राप्य पदं कार्यब्रह्मलोकरूपम्, इदं च 'परं जैमिनिमुख्यात्' इति सूत्रेण परमेव ब्रह्मार्चिरादिना प्राप्यम् । क्लीबस्य ब्रह्म गमयतीत्यत्र ब्रह्मशब्दस्य तत्रैव मुख्यत्वादिति पूर्वपक्षे कार्यस्य ब्रह्मणः परिच्छिन्नत्वेन गन्तव्योपपत्तेः । क्लीबस्य च ब्रह्मशब्दस्य संनिहिते तस्मिन् वृत्त्युपपत्तेश्चेति कार्यं बादरिरस्य गत्युपपत्तेरिति निरूपितम् । कार्यब्रह्मलोकं प्राप्तस्य चानावृत्तिरित्यत्रैवाधिकरणे 'कार्यात्यये तदध्यक्षेण सहातः परमभिधानात्' 'स्मृतेश्च' इति सूत्राभ्यां ब्रह्मलोकात्ययेऽपि तत्स्वामिना हिरण्यगर्भेण सहोपासकः परं ब्रह्म प्राप्नोति । इमं मानवमावर्तं नावर्तन्त इत्यनावृत्तिश्रवणात् । 'ब्रह्मणा सह ते सर्वे संप्राप्ते प्रतिसंचरे । परस्यान्ते कृतात्मानः प्रविशन्ति परं पदम् ॥ इति स्मरणाच्चेति निर्णीतमिति सर्वं समञ्जसम् । **य इति** । 'अथ य इमे ग्रामे इष्टापूर्ते दत्तमित्युपासते ते धूममभिसंभवन्ति, धूमात् रात्रिं रात्रेरपरपक्षमपरपक्षाद्यान् षड्दक्षिणेति मासांस्तान्मासेभ्यः पितृलोकं पितृलोकादाकाशम्' इत्युक्तधूमादिमार्गयुक्तं स्वः सर्गमेति सः धूमादिमार्गं प्रपन्नः यथायातं गमनक्रममनतिक्रम्य प्रतिनिवर्तते' यथेतमाकाशमिति धूमादिमार्गे पुनरावृत्ति श्रुतेरित्यर्थः । लिङ्गदेहेन 'अपञ्चीकृत भूतोत्थं सूक्ष्माङ्गं भोगसाधनम्' इत्युक्तप्रकारेण विशिष्टं बोधज्ञानम्, आदिना इच्छादिकरणापाटवादिति भावः । चिरं तिष्ठेदित्युक्तम् । तत्किं रूपेणेत्यतो **व्रीहीत्या**'द इति । इह व्रीहियवा ओषधि वनस्पतयस्तिलमाषा इति जायन्त' इति श्रुतेरित्यर्थः । कुतश्चिरं तिष्ठेदित्यत आह—**जनीति** । कालकर्मसंयोगविलम्बादिति भावः ॥१२॥

**तदन्विति** । चिरमवस्थानानन्तरम् ॥

**पुण्यप्रभावात् ऊर्ध्वलोकगासिनां जीवानामियं स्थितिः ।**
**ये देवयानपितृयानपथानभिज्ञा जीवास्तु ते जनिमृतीः क्रिमिकीटरूपाः ।**
**व्यावर्तयन्ति सुचिरादिह कल्पकोटीर्नोर्ध्वं व्रजन्ति गहनैवमसाव-**
**विद्या ॥१४॥**

अतो जीवराजस्य तदेतन्महासंकटविमोचनाय भवतैव प्रयतितव्यम् । चिरादभेदेनोपलाल्यमानादमात्यादृते किमायतानि राजसौभाग्यानि । तदिह कुतो विचक्षणोऽपि भवानात्मनोऽधिकारं न प्रतिपद्यते । अपि च प्रयत्न एष तत्प्रतीपबलवत्तरवरवर्णिनीपरिणयनरूपतया तव सुकर एव । कथमिदमनावेद्यैव राज्ञे करणीयमिति न शङ्कनीयम् ॥

---

कालकर्मपरिपाके सति तान् व्रीह्यादीन् तस्याश्नतः रेतसा स्वकर्मानुरूपं जन्म प्राप्नोति । 'यो रेतः सिञ्चति तद्भूय एव भवति तद्य य इह रमणीयचरणाभ्यारोहयत्ते रमणीयां योनिमापद्येरन् ब्राह्मणयोनिं वा क्षत्रिययोनिं वा वैश्ययोनिं वेति श्रुतेरित्यर्थः । स्वर्गानधिगमे हेतुः **पापिन इति । श्वान इत्यादि ।** 'अथ य इह कपूयचरणाभ्यारोहयत्ते कपूयां योनिमापद्येरन् श्वयोनिं वा सूकरयोनिं वा चाण्डालयोनिं वा' इति श्रुतिः पुल्कसशब्देन क्षत्रियायां शूद्रादुत्पन्नातिजघन्यसंकरजातिवाचिना लक्षणया श्रुत्युक्तचण्डालमात्रं गृह्यते । इदमपि पुण्यशालिनाम् ॥१३॥

ये पुनः पातकबाहुल्यात् मार्गद्वयस्याप्ययोग्याः तथैतयोः पथोः न कतरेण च तानीमानि क्षुद्राण्यसकृदावर्तीनि भूतानि भवन्ति । जायस्व म्रियस्वेति श्रुत्युक्तक्रिमिकीटदंशमशकादिजन्मभाजः सन्तो जननमरणप्रवाहरूपं संसारं चिरतरं पुनरावर्तयन्तीत्यर्थः ॥१४॥

**तत्प्रतीपेति ।** अविद्याविरोधीत्यर्थः । **बलवत्तरेति ।** शिवभक्तिप्रभृतिसर्वातिशायि सहकारिसंपन्नेत्यर्थः । तेनात्यन्तसुकरत्वमुक्तम् ॥

विस्रम्भप्रणयोचिताः सुचरिता धर्मार्थविज्ञानिनो
ये तावत्किल मन्त्रिणः क्षितिभुजामेते किमर्थान्तरम् ।
अन्यद्धर्मचरं शरीरमपरं सालोचनं लोचनं
राज्ञः किं बहुनामितो विजयिनः प्राणा भवन्त्यान्तराः ॥१५॥

न तावदमात्यमात्रं भवान् । अपि तु नर्मसचिवश्च । तदपूर्वरमणीसंघटनमिदमवश्यकरणीयमनुरूपं चेति तदनु तानहमप्राक्षम्—

'क्वत्या किं प्रभवा किमाकृतिगुणा किंनामधेया च सा
श्रेयस्तद्घटने किमस्त्यघटने किं नाम तद्धीयते ।
तत्रासौ परिपन्थिनः क इह नस्तैरन्तरायाः कथं
तेषामप्यपनोदनेऽथ घटने कश्चाभ्युपायो भवेत्' ॥१६॥

इति । तदनु ते मामवोचन्—

---

**धर्मार्थेति** । धर्मार्थशास्त्रयोरभ्यासनिरता इत्यर्थः । 'विज्ञानं शिल्पशास्त्रयोः' इति निघण्टुः । 'अर्थशास्त्रं परं तस्मात्' इति विद्यास्थानेषु परिगणितम् । महाभारते ब्रह्मप्रणीतं नीतिशास्त्रमधिकृत्य—

'संचिक्षेप ततः शास्त्रं महार्थं ब्रह्मणा कृतम् ।
वैशालाक्षमिति प्रोक्तं तदिन्द्रः प्रत्यपद्यत ॥'

इति प्रतिपादितम् । अन्यच्च कामन्दकी नीतिशास्त्रम् अर्थशास्त्रमिति बोध्यम् । धर्मे राजधर्मे चरतीति धर्मचरम् । कर्तव्यार्थचिन्तनरूपालोचनसहितम् ॥१५॥

नर्मसचिवश्च इत्यनेन प्रकृतकार्यानुकूलत्वं सूचितम् । तदनु इत्यनेन तदुक्तमङ्गीकृत्य तदुपायप्रश्नेन प्रागुक्तविधूतस्य शमावगमात् तच्छमः शम इत्युक्तः शमो दर्शितः ॥

**अथ घटत इति** । विद्यासंघटन इत्यर्थः । **क्व सेति** ।

वेदारण्यावसथ मुदितास्वामिनी मादृशाना-
माविर्भूता मननजनिदिध्यासनात् पुण्यभूम्ना ।
विद्युल्लेखाचिरतरसमुद्योतिनीवादभुतश्री-
रेषा योषामणिरुपनिषद्वंशभूषा विभाति ॥१७॥

विद्याख्या हृदयंगमाकृतिरसावस्याः समासादने
न व्याधिर्न जरा न मृत्युरशना या सा पिपासापि न ।
न क्लेशो न भयं च किं तु परमानन्दातिसान्द्रीकृता
दुःखासंकलिता च काचन दशा सत्या समुन्मीलति ॥१८॥

---

प्रथमप्रश्नस्योत्तरम् वेदारण्येति । द्वितीयस्य आविर्भूतेत्यादि ॥१७॥

किमाकृतिगुणेति मिलितविषये तृतीयप्रश्ने प्रथममाकारं निरूपयति — विद्येत्यादि । किं नामधेयेत्यस्योत्तरम् विद्याख्येति । श्रेयस्तद्घटने किमित्यस्योत्तरम् अस्या इत्यादि । अत्र श्रुतिः—'अशनायापिपासे शोकं मोहं जरां मृत्युमत्येति । व्याधिः जरादिः । क्षीणैः क्लेशैः जन्ममृत्यु-प्रहाणिभिः । 'अभयं वै जनकं प्राप्तोऽसि एतदमृतमभयमेतद्ब्रह्म' इति । उक्तविधया भयाद्यभावेऽप्यपुरुषार्थत्वमाशङ्क्याह—किं तु इति ॥१८॥

न जरा न मृत्युरित्यादिना व्यतिरेकमुखेन अघटने किम् इति प्रश्नस्य जरादि भवतीत्यर्थादुक्तमप्युत्तरमुपपत्तिप्रदर्शनेन विशदयति—सत्या-नन्दमित्यादिश्लोकेन । विद्यया लभ्यं धनमिव विद्याधनम् । अत्यन्त-दरिद्रस्यानवधिकधनलाभो हि पुरुषार्थ इव भवतीत्यर्थः । अत एव महाभारते परमेश्वरं प्रस्तुत्य 'व्यक्तं वेदविदां निधिम्' इत्युक्तम् । पङ्कतः कर्मवासनाभिः । यद्यपि पङ्कं पापम्, तथापि कर्ममात्रमिह ग्राह्यम् । सुकृतस्यापि दुष्कृतवत् बन्धहेतुत्वेन ब्रह्मनिष्ठस्य हेयत्वात् 'सर्वे पाप्मानो निवर्तन्ते' 'सर्वेभ्यः पाप्मभ्य उदितः' 'एवमेवंविदि पापं कर्म न श्लिष्यत इत्यादि श्रुतिष्विवेति भावः व्यथयत इति । 'अमूढो मूढ इव व्यवहरन्नास्ते माययैव' इति । विद्या-

सत्यानन्दमपारमक्षयमिदं विद्याधनं पङ्कतः
कृत्वा गाढनिगूहितं व्यथयते लोकानविद्या चिरम् ।
तिष्ठन्नेव विधौ यथानिधिमविज्ञायैव कार्पण्यतो
विष्वग्धावति तद्वदेतदविदन् जीवः परं खिद्यते ॥१६॥

यस्यां मुह्यति निद्रया निशि जगत्स्वप्नेन्द्रजालाकुलं
तस्यां जाग्रति योगिनस्तदनया सत्यार्थसंदर्शिनः ।

---

विरहे सति ईदृशी व्यथैव भवतीत्यर्थः । तिष्ठन्नेवेति । तद्यथापि हिरण्यनिधिं निहतमक्षेत्रज्ञा उपर्युपरि संचरन्तो न विन्देयुरेवमेवेमाः सर्वाः प्रजा अहरहर्गच्छन्त्य एतं ब्रह्मलोकं न बिन्दन्ति अनृतेन हि प्रत्यूढा' इति श्रुत्यर्थः । संगृहीतः । तथा च विद्याविरहे अविद्यासंबन्धात् क्लेशभयादिः सर्वोऽप्यनर्थ इत्यर्थः । यद्वा ननूक्तं तावद्रूपोपहितं प्रत्यगभिन्नं ब्रह्म नित्यलब्धमेवेति तदर्थं विद्यापरिग्रहो व्यर्थ इत्याशङ्क्याह—सत्येति तथा च श्रुत्युपन्यस्तहिरण्यनिधिदृष्टान्तेन लब्धस्यापि ब्रह्मणः विद्याविरहे अविद्यानिगूढत्वेनालब्धप्रायत्वादावश्यकं विद्यापरिग्रहणमिति भावः ॥१६॥

छान्दोग्ये सद्विद्यायां 'तत्त्वमसीति नवकृत्वोऽभ्यासवदभ्यासे हि सति भूयस्त्वमर्थस्य भवति नाल्पत्वमपि दूरे उपचरितार्थत्वम्' इति न्यायेन पुनः फलान्तरप्रदर्शनेनोक्तमर्थं द्रढयति —**यस्यामिति**। अविद्यारूपायां रात्रावित्यध्याहार्यम् । अत एवाह—**मुह्यति निद्रयेति** । रात्रौ निद्राप्रसिद्धेरिति भावः । निद्रयेति तृतीयया ज्ञानाभावरूपमोहे निद्राशब्देन लक्षणया मनः पुरीतत्प्रवेशस्य हेतुत्वमुक्तमिति ध्येयम् । तथा च प्रयोगः—'स्पृशन्निमां मुह्यति निद्रया हरिः' इति । यद्वा मुह्यति मोहाश्रयो भवति । कुतः निद्रया हेतुना निद्रारूपमोहवानिति यावत् । स्वप्नेन्द्रजालवदाकुलं स्वप्नेन्द्रजालदृश्यप्रपञ्चवत् चञ्चलमत्यन्तनश्वरमित्यर्थः । सैवेयं तदीयं ततस्तृतीयया उक्तप्रकारशालिन्या अनया विद्ययेत्यर्थः । **सत्यार्थसंदर्शिन** इति । 'सत्यं ज्ञानमनन्तं ब्रह्म' इति श्रुत्युक्तस्यार्थस्य ब्रह्मरूपस्य विद्यया दर्शनशीलाः निद्राणेषु प्राणिषु

**दिव्या दृष्टिरियं निमेषरहिता हन्तानया पश्यतां**
**छिद्यन्तेऽखिलसंशयभ्रमविपर्यासाश्च कर्माणि च ।।२०।।**

---

स्वयं निद्राणा अपि स्वयम् 'अयमात्मा ब्रह्म' सर्वानु भू रित्युक्तसर्वानुभव-स्वप्रकाशब्रह्मरूपतया जाग्रति । 'या निशा सर्वभूतानां तस्यां जागर्ति संयमी' इति भगवद्वचनादिति भावः दिव्येति । लोकप्रसिद्धं दृष्टिविलक्षणात्य-द्भुतार्थदर्शनसाधनीभूतेत्यर्थः वैलक्षण्यमेवाह—निमेषरहितेति । हन्तेति निपातः आश्चर्ये । छिन्द्यत इति । विरुद्धनानाकोटिकज्ञानं संशयः । अतस्मिन् तद्बुद्धिः भ्रमः । यद्यपि विपर्यासो भ्रमान्नातिरिच्यते तथापि शुक्तिरजतरज्जु-सर्पादिज्ञानं निरुपाधिकं भ्रमः । लोहितः स्फटिकः, पीतः शङ्खः, स्थूलोऽहं, गौरोऽहमित्यादि सोपाधिकप्रत्ययः विपर्यास इति भेदेनोपन्यासः ।

'भिद्यते हृदयग्रन्थिः छिद्यन्ते सर्वसंशयाः ।
क्षीयन्ते चास्य कर्माणि तस्मिन् दृष्टे परावरे ।।'

इति श्रुतिः स्मृतिश्च । 'ज्ञानाग्निः सर्वकर्माणि भस्मसात्कुरुते तथा' इति भावः ।।२०।।

उक्तमर्थं प्रत्यक्षमूल श्रुत्यर्थसंकलनेन विशदयन् उक्तप्रकारेण सर्वतोऽतिरमणीयगुणमणिगणभूषणारमणीयमित्युपसंहरन् किमाकृतिगुणेति गुण-प्रश्नस्याप्युत्तरं लब्धमिति दर्शयति—अस्या वैभवत इति । विद्यामहिम्ना स्वप्रकाशचैतन्यरूपस्य सतः पुरुषस्य रात्रिरप्यहरेव भवति प्रकाशापायेन कियतोऽपि तमसः प्रसङ्गे रात्रिर्भवति विद्यया निरवशेषिते तमसि सततोदितानस्तमितप्रकाशरूपस्य ब्रह्मणः एव सद्भावादिति भावः । अपि नक्तम-हरेवाभिनिष्पद्यते सकृद्विभातो ह्येवैष ब्रह्मलोक' इति श्रुतिः । तथा च विद्यासंबन्धे सतीदृशं फलं भवतीति प्रशस्य तदनङ्गीकारे दण्डमाह—आत्मेति । आत्मस्वरूपानन्द एव निरन्तरानुस्यूतिहृदयंगमत्वसादृश्यात् सुधासमुद्रल-हरीत्वेन निरूप्यते— सेति । पूर्वोक्तस्वप्रकाशचैतन्यं परामृश्यते । स्त्रीत्वं च समुद्रलहरीति निरूपणापेक्षयेति ज्ञेयम् । निरन्तरेण प्रपञ्चमात्रानुस्यूतेन ।

अस्या वैभवतोऽपि नक्तमहरेवास्याभिनिष्पद्यते
तच्चाहर्न कदापि याति सकृदेवास्य प्रभातोदयः ।
आत्मानन्दसुधासमुद्रलहरी सा चेदनासादिता
मध्याह्नोऽपि निरन्तरेण तमसा घोरो निशीथो भवेत् ॥२१॥

इति । तदेवंविधदिव्यमङ्गलगुणग्रामा विद्येयम् ।

राजा—(*सपरितोषम्* ।) ततस्ततः ।

---

तमसा अविद्याख्येन । घोरः भयङ्करः निशीथः अर्धरात्रः । तथा च विद्याविरहे 'पश्यन् वै तन्न पश्यति' इति श्रुत्या स्फीतालोकसंयुक्तघटादिप्रपञ्चविज्ञानमप्यद्रष्टव्यब्रह्मगोचरत्वाभावेन केवलाविद्यकविषयत्वेन च पुनः पुनः बन्धरूपानर्थहेतुत्वादिति भावः ॥२१॥

**कामक्रोधमुखा** इति । कामक्रोधौ मुखे येषां ते इत्यतद्गुणसंविज्ञान बहुव्रीहिणा कामक्रोधलोभमोहमदमात्सर्याणामरिषड्वर्गत्वेन प्रसिद्धानां ग्रहणमोजायितमिति पराक्रममित्यर्थः । ओजः शब्दात् 'कर्तुः किं सलोपश्च' इति विहितस्य क्यङः 'ओजसोऽप्सरसो नित्यम्' इति स्मरणात् नित्यं सलोपे ओजायितमिति क्तान्तस्य रूपम् । ननु भवत्संनिधानं कथं भवति संनिधाने वा कथं तज्जयः स्यात् । तेषां समबलत्वसंभवात् दुर्बलत्वेऽपि साम्ना भवदेकवाक्यतया तेषामवस्थानं स्यात् ।

'समाक्रान्तो बलवता दुर्बलो हि महीपतिः ।
श्रयेत वैतसीं वृत्तिं मौञ्जिकीं न कदाचन ॥'

इति नीतिशास्त्रानुसारादित्यत्राह यत्रासौ इति । समुदिताः संगताः । अन्धम् दर्शनविघातकम् । तथा च जन्मान्तरसुकृतपरिपाकलब्धपरमेश्वरानुग्रहस्य कस्यचित् पुरुषधौरेयस्य 'परीक्ष्य लोकान् कर्मचितान् ब्राह्मणो निर्वेदमायन् नास्त्यकृतः कृतेन शान्तोदान्त उपरतस्तितिक्षुः समाहित' इत्यादि श्रुत्युक्तशम-

**चित्तशर्मा—**

**कामक्रोधमुखाः प्रतीतविभवा जीवस्य षड्वैरिण-**
**स्तेह्यस्माकमसंनिधौ विदधते निश्शङ्कमोजायितम् ।**
**यत्रामी वयमास्महे समुदिताः साकं विवेकादिभि-**
**स्तत्रैते न समुन्मिषन्ति पुरतो भानोरिवान्धं तमः ॥२२॥**
**जीवस्याप्यभितोऽपघातिन इमे विघ्नास्तु तत्सम्भवाः**
**कर्षन्तो विषयेषु तं विघटयन्त्यस्मासु यत्संगतम् ।**
**एतेषामपनोदनेऽभिलषिते चार्थेऽभ्युपायस्त्वयं**
**गूढं गाढनिरूढमत्रभवतः सौहार्दमस्मासु यत् ॥२३॥**

त्वयि तु विधेये संपन्नकल्पो वेदारण्यप्रवेशः। स एव परमोपाय इति। तदनु 'किमेतादृशि मत्स्वामिनः श्रेयसि मत्सकाशादनन्तरं पतिष्यति। सर्वथाहमत्र विषये युष्मदायत्तः' इति सशपथमभिहितवानस्मि ।

---

दमविवेकवैराग्यादिसाधनसंपत्तौ कामादिः स्वत एव निवर्तत इति सर्वानुभवसिद्धमिव पुरतो भानोरन्धतम इति वदतोऽभिप्रायः ॥२२॥

तैरन्तरायाः कथं विद्याघटने कश्चाभ्युपाय इति प्रश्नस्योत्तरमाह **जीवस्येति**। इमे कामादयः। तत्संभवाः कामादिसंभवाः। तेषां विघ्नत्वमुपपादयति **कर्षन्त** इति। **एतेषामिति**। कामादीनां पराजये विद्यासंघटने चास्मासु भवत्पक्षपात एवासाधारणोपाय इति भावः॥२३॥

**संपन्नकल्प** इति। ईषदसमाप्तौ कल्पप्। संपन्नप्राय इत्यर्थः। उक्तं निगमयति **स एवेति**। अन्तरमवकाशो विलम्ब इति यावत् ॥

प्रणयः मैत्री विस्रम्भो विश्वासः। असंनिधानेऽपीति।

'सौहार्दस्वर्णरेखाणामुच्चावचभिदा जुषाम् ।
परोक्षमिति कोऽप्यस्ति परीक्षानिकषोपलः ॥'

**राजा**—वयस्य, प्रणयविस्रम्भो नाम तदुभावेव यदेवमसंनिधानेऽपि मदनवगतमेव मदीयश्रेयसि बहुधा व्यापृतमिति। (*परितोषमभिनीय।*) सखे चिन्तशर्मन्,

**एते मच्छ्रवसी तदद्भुतगुणस्तोमामृतासज्जना-**
**दत्यन्तं सुहिते तदत्र विषये वद्धाभ्यसूये इव।**
**एते तन्मुखचन्द्रमस्स्मितसुधातर्षाकुले ताम्यतो**
**मद्दृष्टी (?) त इमे कया नु विधया संप्रीणयिष्याम्यहम्। २४॥**

---

इति न्यायादिति भावः। परितोषमिति। एवंविधाप्ततमसचिवं लाभप्रयुक्तमित्यर्थः॥

**तदद्भुतेति**। तस्या अद्भुता गुणास्तोमा एवामृतानि तदा सज्जनात् तत्संबन्धात्। सुहिते तृप्ते। तदत्र तस्मिन्नत्र। विषय इति। तत्तस्मादत्रेति समस्य व्यस्य वा योज्यम् ताम्यतः ग्लायतः। विधया प्रकारेण। एवं च दर्शनोपायो नास्तीति फलितम्॥२४॥

तदेतत् प्रपञ्चयति **तामित्यादिना**। स्वप्ने जागरेव तद्दर्शनं संभवतीत्याशङ्क्य निरस्यति **स्वप्न** इति। **दुराप** इति। चिन्ताकुलस्य निद्रैव नेति भावः। **दूर** इति। वक्तुमशक्य इत्यर्थः। अत्यन्तविप्रकर्षेण प्रत्यक्षप्रसक्तिरपि नेति यावत्। **आयासोत्तरमिति**। तस्मादिति शेषः। उक्तचिन्तया अधिकायासमित्यर्थः। **आ** इति खेदे निपातः। विषयैः विनोदनसाधनैः आश्वासये विनोदये॥२५॥

**स्मरणमिति**। अत्र 'एते मच्छ्रवसी' इत्यादिना दृष्टस्य जीवराजानुरागरूपावान्तरबीजस्य 'तामालिख्य' इति श्लोके तद्दर्शनोपायसंभवेन नष्टस्य चित्रपटस्मरणेन पुनरनुसरणात् परिसर्पो नामाङ्गम्। दृष्टनष्टानुसर्पणं' परिसर्प इति वचनात्॥ **अभिरूपता** सौन्दर्यम्॥

तामालिख्य विनोदयेय नयने दृष्टा यदि स्यान्मनाक्
स्वप्ने तामवलोकयेयमिति चेत्स्वापो दुरापो मम ।
अध्यक्षीकरणप्रसक्तिरपि मे तस्यास्तु दूरे गिरा-
मायासोत्तरमाः कथं नु विषयैरात्मानमाश्वासये ॥२५॥

(*स्मरणमभिनीय ।*) तत्रभवत्या प्रतिश्रुतं प्रतिकृतिदर्शनं तु संभाव्येतापि ।

(*ततः प्रविशति विरक्त्या सह निवृत्तिः*)

**निवृत्तिः**—(*पुरतो विलोक्य ।*) अयमितः चित्तशर्मणा नर्मसचिवेन सह विविक्तमध्यास्ते देवः । तदेनमुपसर्पामि । (*उपसृत्य*) विजयतां देवः । (*इति राज्ञो हस्ते चित्रपटमर्पयति ।*)

**राजा**—(*चित्रपटं निर्वर्ण्य । साश्चर्यम् ।*) अहो प्रतिकृतेरभिरूपता ।

---

**शुद्धेति** । शुद्धः अकलङ्कः अमृतधामा चन्द्रः । श्रुती श्रोत्रे । तदन्तविसारि दृष्टितया लोचनतया उल्लसिता विश्वातिशायिनी वृत्तिः । व्यापारोऽस्या इति बहुव्रीहिः । विषयो देशः इति नायिकापक्षे । विद्यापक्षे तु शुद्धं क्रममुक्तिवत् गुणासंकीर्णममृतं मोक्षः । विदेहकैवल्यम् तस्य धाम स्वप्रकाशात्मरूपः प्रकाशः तन्मुखे अग्रे यस्याः तद्विषयेति यावत् । श्रुत्यन्ताः वेदान्ताः । तेषु विसारिणि तत्र प्रसिद्धा दृष्टिता दर्शनरूपता, तयोर्लसिता विश्वातिशायिनी वृत्तिरखण्डाकाररूपेति कर्मधारयः । विश्वातिशायित्वं च तादृग्विषयकत्वात् सर्वानर्थनिवृत्तिरतिशयानन्दरूपमुक्तिहेतुत्वाद्वा । विषयेषु दृग्रूपा आत्मातिरिक्तेषु गोचरेषु दृश्येषु ॥२६॥

**अखण्डेति** । अखण्डः संपूर्णः आकारः तस्य वृत्तिः संबन्धः तेनोज्ज्वल इत्यर्थः ॥२७॥

शुद्धामृतधाममुखी श्रुत्यन्तविसारिदृष्टितोल्लसिता ।
विश्वातिशायिवृत्तिर्विषयेषु कुहापि नेदृशी दृष्टा ॥२६॥

पद्मोल्लासतरङ्गितं पदयुगं जङ्घे सुवृत्तोज्ज्वले
रम्भाडम्भ (?) विडम्बिनौ च तदिमावूरू मनोहारिणौ ।
मध्यं व्योमसखं मुखं विधुरखण्डाकारवृत्त्युज्ज्वलः
कल्याणी वत सेयमद्भुतगुणा कल्याणकान्ताकृतिः ॥२७॥

(*साशङ्कं पार्श्वतो विलोक्य।*) दिष्ट्यात्र न संनिहिता देवी ।

(*ततः प्रविशति विषयवासनया प्रवृत्त्या च सहाविद्या।*)

**अविद्या**—सखि, विषयवासने, कृतज्ञोऽपि देवः त्वद्वचनगौरवेण ममानुसरणीयः संवृत्तः ।

**विषयवासना**—प्रियसखि, कीदृशमपि दयितमनुसरणेन हृदयरञ्जनेन च विधेयीकुर्वन्ति खलु युवतयः ।

**अविद्या**—सखि प्रवृत्ते, देवः कतमं देशमधिवसतीति जानीहि ।

**प्रवृत्तिः**—(*पुरतो विलोक्य।*) नन्वयमित एव चित्तशर्मणा तापसीभ्यां सह शृङ्गारवने मालतीमण्डपमध्यास्ते देवः ।

**अविद्या**—तर्हि विटपान्तरिता एव शृणुमस्तावदेतेषामन्योन्यविस्रम्भजल्पितानि ।

(*इति सर्वास्तथा कुर्वन्ति।*)

---

अनुसरणेनेत्यस्य विशेषणं हृदयरञ्जनेनेति । न केवलं गुरुशिष्यन्यायेन राजभृत्यन्यायेन वानुसरणम्, किं तु कामोपचारवैदग्ध्यरूपेणेति तदभिप्रायः ।

**सुखायन्त** इति । 'सुखादिभ्यः कर्तृवेदनायाम्' इति क्यच् । सुखमावेदयति किमित्यर्थः ॥

**चित्तशर्मा**—अपि नाम सुखायते दृशोरियं चित्रगता प्रियतमा ।

**राजा**—किमुच्यते सुखायत इति ।

**आप्लाव्य ज्वलदङ्गमङ्गमभितः संसृप्य नाडीष्वपि**
**प्लोषावेगकदर्थितासुकरणान्युज्जीवयन्ती पुनः ।**
**अस्या निस्तुलतत्तदङ्गसुषमाकल्लोलिता काप्यसा-**
**वानन्दामृतदिव्यसिन्धुलहरी विश्वं किलापह्नुते ॥२८॥**

संप्रति हि

**आलिप्ये नु तुषारलोलनलल त्कर्पूरगन्धद्रवै-**
**रासिच्ये नु घनीकृतैरुत सुधाधाम्नो मयूखोत्करैः ।**
**एतद्दर्शनसंभृतेन परमानन्देन दावानल-**
**प्लुष्टो भूमिधरः सुधारसभरेणेवाङ्गमाप्याय्यते ॥२९॥**

---

आप्लाव्येति । एतद्विरहानलज्वालाजटिलानि करचरणादीनि अङ्गानि नाड्यः सिराः करणानीन्द्रियाणि चासौ बुद्धिसंनिहितानन्द एव वृत्त्यन्तासंकीर्णत्वात् हाररूपेण परिणतो जीवनपुनरुन्मज्जनकारित्वादमृतमय वियन्नदीनिरर्गलप्रवाहसवर्ण्यङ्गान्याप्लावयन् संतापं निरवशेषीकरोतीति तदेकरसत्वात् प्रपञ्चः कोऽपि न परिज्ञायतः इत्यर्थः ॥२८॥

आलिप्यत इति । तुषारस्य तुहिनसलिलस्य लोलनेन ललन्तः परिभ्रमन्तः, कर्पूरपूरितचन्दनक्षोदस्य द्रवाः तैः। अत्र गन्धशब्दो 'वहति जलमियं पिनष्टि गन्धान्' इत्यत्रेव चन्दनद्रव्यपरः। घनीकृतैः सान्द्रीकृतैः। अन्यथा अतिस्वच्छस्य चन्द्रकिरणसंचयस्य हस्तादिसेवनीयत्वासंभवादिति भावः। एवं द्विप्रकारं संशयमुपन्यस्य संप्रति निश्चयं दर्शयति एतर्दिति। अनेन

**निवृत्तिः**—(*अपवार्य।*) सखि विरक्ते, दिष्ट्या फलितमिव नः प्रयत्नेन।

**विरक्तिः**—कथं न फलिष्यति भगवत्या नीतिवैदग्धी।

**राजा**—(*चिरं निर्वर्ण्य सोन्मादं चित्रं प्रति।*)

मृद्नामि किं नु मृदुलं पदपल्लवं ते
किं ते लिखामि कुचयोरुत पत्रवल्लीम्।
एह्येहि मे विदधती सकृदङ्कपाली-
मन्तर्गतं निरवशेषय तापमेनम्॥३०॥

**चित्तशर्मा**—(*सोपहासम्।*) वयस्य, प्रकृतिरियं खलु तस्याः।

**अविद्या**—सखि, श्रुतं ननु श्रोतव्यम्। तदेवमेतैः इतरनायिका-संघटकुहनाभिरिति संधीयामहे।

**विषयवासना**— सखि, भूयोऽपि शृणुमस्तावत्।

**निवृत्तिः**— देव, सत्वरमनया सुदृशा सह भवन्तं योजयिष्यामि। न पुनरिह विषये भवता विषादो विधेयः।

**राजा**—परमकारुणिकीभ्याम् अप्रमेयमहिमातिशयाभ्यां भवतीभ्यां गृहीतस्य मम को नाम विषादः।

**अविद्या**—सखि, श्रुतानि खलु भूयः श्रवणामृतानि।

**विषयवासना**—प्रियसखि, भवत्संनिधाने सर्वमिदं विघटितं भवेत्। (*इत्यद्धतमुपसर्पति।*)

**राजा**—(*दृष्ट्वा। सभयम्।*) वयस्य, का प्रतिपत्तिः।

**चित्तशर्मा**—वयस्य, भवता कथमपि समाधीयते सा। मम तु का गतिः। (*विचिन्त्य।*) भवतु। तामेवानुसरेयम्। इमे च तपस्विन्यौ तिरस्करिणीविद्यया चित्रफलकेन सह तिरोहिते भविष्यतः।

**राजा**— तथा। (इति *धैर्यमवलम्ब्य तिष्ठति*।)

**चित्तशर्मा**—(*उपसृत्य।*) स्वस्ति भवत्यै।

---

निश्चयान्तः संशयो दर्शित इति। किं तावत् सरसिसरोजमेतदारादित्यादाविव ससन्देहालङ्कारः। अङ्गमिति। ममेति शेषः। शरीरमित्यर्थः। अत्र शरीरस्योपमेयस्य भूमिधरस्य चोपमानस्य यद्यपि नैकः साधारणो धर्मः। उभयोर्निर्दिष्टस्यानन्दस्य सुधाझरस्य च भेदात्। तथापि बिम्बप्रतिबिम्बभावेनाभेदात् साधारणधर्मता बोध्या ॥२९।

**मृद्नामि** संवाहयामि। पत्रवल्लीम् मकरिकादिरूपाम्। अङ्कपालीम् आश्लेषम् ॥३०॥

**इतरेति** अपूर्वनायिकासंघटनयोः कुहनावचना अस्मदपवारणोपायाः तैः प्रतार्यामहे इत्यर्थः। **भवतीभ्यामिति**। उपस्थितत्वात् विरक्तिनिवृत्ती गृह्येते। **श्रवणामृतानीति**। विरोधिलक्षणया कर्णपुटकन्दलितकठोरकालानलकीलायितानि वचनानीत्यर्थः। **दृष्ट्वेति**। नातिदूर इत्यर्थः॥ **का प्रतिपत्तिरिति**। कर्तव्येति शेषः। **अपवार्येति**। त्रिपताकाकारेणान्यानि इत्याद्यपवारणलक्षणमुक्तम्। **वयस्येति**। प्रणयिनो परस्परं प्रणयापराधः सुपरिहरः। प्रेक्ष्यापराधस्तु दुष्परिहरः। 'परिणतौ दूती परं दूषिता' इति न्यायप्रसङ्गादिति भावः॥ **परमार्थतयेति**। अत्र स्वदोषप्रच्छादावगमनात् नर्मद्युतिर्नामाङ्गम्। दोषप्रच्छादनार्थं तु वचो नर्मद्युतिर्भवेत्' इति लक्षणात्॥ **इदमिति**। चित्रदर्शनादिकमित्यर्थः। एतत् त्वदीयप्रत्यक्षसिद्धावलेपनसाहसमेवेन्द्रजालमित्यर्थः। **प्रतिपद्यस इति**। यत एवं पुनः पुनः पृच्छसीत्यर्थः।

**अविद्या**—(*चित्तशर्माणं निर्भर्त्स्य, राजानमुपसृत्य।*) अपि सुखायते चित्रगता प्रियतमा। अपि संघटयिष्यतः तापस्यौ।

**राजा**—(*सभयगद्‌गदम्।*) देवि, तवासांनिध्यात् चित्तशर्मणा कालविनोदनाय विरचितमिन्द्रजालम्। इदं परमार्थतया न गृह्‌णातु भवती।

**अविद्या**—हन्त, प्रत्यक्षसिद्धापलपनसाहसमेतस्य।

**राजा**—अतथाभूतमपि वस्तु तथाभूतमिव प्रत्यक्षमुपदर्शयेयुः न किमैन्द्रजालिकाः। तदपि यदि सत्यमेवावगच्छसि। तत्र कः परिहारः।

**अविद्या**—न तावदिदमिन्द्रजालं चित्तशर्मणः। अपि तु तवैव साहसमेतत्। क्व ते तापस्यौ। क्व च सा प्रतिकृतिः।

**राजा**—ननु कथितमेव सकलमिन्द्रजालमिति। त्वं तु परमार्थतयैव प्रतिपद्यसे।

---

**शठेनेति**। 'गूढविप्रियकृच्छठः' इति निघण्टुः। अत्र वज्रं नामाङ्गम्। 'वज्रं प्रत्यक्षनिष्ठुरम्' इति लक्षणम्।

**प्रसीद प्रसीद** इत्यादरे द्विरुक्तिः। तेन 'सान्त्वनं पर्युपासनम्' इति लक्षितं पर्युपासनाख्यमङ्गमुक्तम्।

**न ब्रूष इत्यादि**। किम् अयुक्तमित्यर्थः। तादृशम् सहजप्रणयनम्। ननु प्रत्यक्षे विप्रिये कस्मादिति किमित्याशङ्क्य संभावितं खलु सांसारिकव्यवहारे सदसच्च तत्र संसारिभिरसदपि तितिक्षितव्यमेव। अपरथा तदैव संसारविघटनप्रसंगादित्याशयेन परिहरति दम्पत्योस्तु इति। अमतम् असंमतम्। किं वेति वस्तुत इति शेषः। विधिः दुर्विधिः। तथा च तादृश्याः

**अविद्या**—कृतं कृतमकृतज्ञेनानेन शठेन। *(इति साटोपं परावर्तते।)*

**चित्तशर्मा**—वयस्य, पादप्रणामादिभिरुपचारैः यथोचितं प्रसाद्यतां कुपिता देवी।

**राजा**—*(कतिचित्पदानि गत्वा प्रणम्य।)* प्रसीद, प्रसीद।

*(अविद्या साटोपमवधूय गच्छति।)*

**राजा**—

न ब्रूषे न विलोकसे न च वचस्तथ्यं शृणोषि प्रिये
किन्त्वेतन्मयि तादृशं तव मनः कस्मादभूदीदृशम्।
दम्पत्योस्तु न जायते किममतं जातं न किं मृष्यते
किं वा जातमिहाधुना विधिरहो तिक्तां विधत्ते सुधाम् ॥३१॥

**प्रवृत्तिः**—*(अपवार्य।)* भवत्वयं यादृशस्तादृशो वा। त्वया पुनरपारुष्यमवलम्ब्यताम्।

---

तवापि मय्येवमकाण्डे कोपकारणं दुर्विधिवशादमृतस्य तिक्तीकरणमिति वाक्यार्थयोः सदृशयोरैक्यारोपो निदर्शनेत्युक्तलक्षणो निदर्शनालङ्कारः ॥३१॥

यादृशस्तादृशो वेति। ऋजुर्वक्रो वेत्यर्थः। मामिति। अविद्यासंबन्धाभावे प्रपञ्चप्रसक्त्यभावात्। केन वा कथमहं ज्ञेय इति हृदयम् किं नेति। प्रथमाङ्क एव 'प्रिये नवनवोल्लासरमणीयैः' इत्यादिना प्रपञ्चितत्वादिति भावः। तत्तादृगिति। अनेन 'पुष्पविशेषवद्वाक्यम्' इत्युक्तलक्षणं पुष्पं नामाङ्गमुक्तम्। तत्र विशेषवत् सातिशयमित्यर्थः ॥३२॥

वितथेति। वितथम् अनृतम् व्यलीकमप्रियमनृतं तदाशङ्कया परतः अनन्तरं दूने इति। अत्रापि पूर्ववन्निदर्शना द्रष्टव्या ॥३३॥

**विषयवासना**—युक्तमाह प्रवृत्तिः ।

**अविद्या**—हन्त, भवतीभ्यामपीदं रोचते । का गतिः ।
(*इति तिष्ठति* ।)

**राजा**—

मां कल्याणि पुरा तवोपयमनाद्ये केऽपि किं जानते
त्वामासाद्य मया प्रिये नवनवं किं नानुभूतं सुखम् ।
तत्तादृङ्महनीयवैभववती सौभाग्यसीमायिता
मां मत्त्वा कृतविप्रियं बत कथं व्याधुन्वती धावसि ॥३२॥

त्वं वित्तादपि गात्रतोऽपि करणग्रामादपि प्रेयसः
प्राणादप्यधिकेति सुन्दरि भवत्प्रीत्यैकबद्धादरः ।
वर्तेऽहं वितथव्यलीकपरुषा नैर्घृण्यमालम्बसे
यद्येवं मयि सर्वथैव परितः किं वा करिष्याम्यहम् ॥३३॥

---

अनायत्तता अस्वायत्तता । तद्दोषात् अनायत्ततारूपात् न व्यवस्थेति ऐकरूप्यमित्यर्थः ॥३४॥

अतिप्रसङ्गेन अलम् न किंचित् फलमित्यर्थः । मोक्तुमिति । तापं मोक्तुमिवेति फलोत्प्रेक्षा । रागः आरुण्यम् कान्ताभिलाषश्च । घनपथे आकाशे । अत्र संध्याकाले गगनारूप्यस्य कामिनीनां कान्ताभिलाषस्य चौचित्यात् वर्ण्यत्वेन प्रकृतत्वमिति राग इति श्लेषमूलकः प्रकृतानामेकधर्मान्वय इति तुल्ययोगिता । आर्द्रागा इति विलासि विशेषणम् कुपितकामिनीमनोऽनुरञ्जनस्यावश्यकत्वाभिप्रायगर्भम् । एवं कर्मठेत्यपि भूमिदेवविशेषणम् । सज्योतिषा ज्योतिषो दर्शनादित्यादिकालानतिलङ्घित्वाभिप्रायकम् इत्युभयत्रापि परिकरालङ्कारः एतेषां च संसृष्टिः ॥३५॥

**अविद्या**—(**सोत्प्रासम्** ।) सख्यौ, श्रुतं खलु ।

देवस्यास्यकिलाहमद्य दयिताप्राणादपि प्रेयसी
राजानं प्रति तोदनैरलमहो वाक्यैरमीभिस्तव ।
यद्वा वल्लभवस्तुसंगिनि मनस्यात्मन्यनायत्तता
तद्दोषादयथोचितं व्यवहरस्येवं न दोषस्त्वयि ॥३४॥

**विषयवासना**—देव, सर्वतोमुखविचित्रपरमानन्दविधायिनीं देवीमपहाय वाङ्मनसातिवर्तिनि कुहापि विषये कुतो भवानासज्जति ।

**चित्तशर्मा**—वयस्य, तथ्यमाह विषयवासना ।

**प्रवृत्तिः**—आर्य चित्तशर्मन्, प्रगल्भोऽसि समयोचितमभिधातुम् । तथ्यमेवाह विषयवासना । त्वयि तु न व्यवस्था ।

**चित्तशर्मा**—स एष मम सहजो धर्मः ।

**अविद्या**—अलमलम् अतिप्रसङ्गेन ।

(**नेपथ्ये वैतालिकौ** ।)

**एकः**—

**मोक्तुं तापमिव प्रतीचिजलधौ मज्जत्ययं भानुमान्**
**रागः कोऽपि विजृम्भते घनपथे चित्ते वधूनामपि ।**
**आर्द्रागाः कुपितामुपासिसिषते कान्तां विलासी जनो**
**भक्त्या कर्मठभूमिदेवपरिषत्सन्ध्यां च सायन्तनीम् ॥३५॥**

---

गन्धेनेति । सद्योविकसितकुमुदवनविजृम्भितदिव्यगन्धसंबन्धसमाकृष्टसकलभृङ्गपटलः दिवसावसानस्य सन्ध्यासमयस्य पिशुनः सूचकः । एवं च पवनस्य कैरवाकरभुवेति गन्धविशेषणात् शैत्यं स्पन्दत इति मान्द्यम् 'स्पदि किंचिच्चलन' इत्यर्थनिर्देशात् गन्धेनेति । सौरभ्यं च वायोः गुणाः निबन्धाः ।

**द्वितीयः**—

गन्धेन स्फुटकैरवाकरभुवा विष्वग्विकर्षन्नली-
न्स्वच्छन्दं दिवसावसानपिशुनो मन्दानिलः स्पन्दते ।
भावी नौ विरहाधिरित्यविदितेऽप्यन्तः शुचा स्थीयते
कोकेन प्रियया सहैकनलिनीनालाधिरूढेन च ॥३६॥

(*सर्वे आकर्णयन्ति ।*)

**चित्रशर्मा**—देव, अतिवर्तते सन्ध्यासमयः ।

**राजा**—तथा ।

(*इति निष्क्रान्ताः सर्वे ।*)

तृतीयोऽङ्कः

---

विरहाधिः विरहेण विप्रयोगेण आधिः मानसीव्यथा। **अविदितेऽपीति** तिर्यक्त्वेन वेदनाशक्तावपि कालपरिणतशोकेन कोकेन प्रियया सहाधुनापि स्थीयत इत्यर्थः। अत्र कार्येण सन्ध्यायाः कारणत्वप्रत्यायनादनुमानालङ्कारः ॥३६॥

*इति तृतीयोऽङ्कः*

---

## चतुर्थोऽङ्कः

(ततः प्रविशति चित्तशर्मा)

**चित्तशर्मा—**

तेजोवैभवकौशलोपकरणान्यद्धा मुधासिद्धिषु
व्यक्तं राघवपाण्डवादिषु रणे मुह्यत्सु दृष्टं हितम् ।
तन्मन्ये पुरुषस्य कांक्षितहितावाप्तिस्तु दैवेच्छया
स्वेनेदं कृतमेतदाप्तमिति ये नन्दन्ति मूढा हि ते ॥१॥

अद्यखलु

विस्रम्भप्रणयास्पदस्य सुहृदो निर्व्यूढमिष्टादिकं
देव्याः प्रार्थितकार्यसाधनकृता प्रीतिः समग्रोदया ।
तत्रापि स्वसमीहितार्थफलसंपत्तिर्विरोधं विना
दैवेनोपनतं कियत्कियदहो वाञ्छानुरूपं हितम् ॥२॥

---

एवं तृतीयाङ्के जीवराजस्य विलिखितविद्याप्रतिकृतिकचित्रपट प्रदर्शनेन तदवगतवत्यां देव्यां कोपेन निर्गतायां तत्समाधानस्य दुष्करतया किमिदमापतितमिति चिन्ताचंचले जीवराजे ततः प्रतिनिवृत्तनिर्वृत्तिविरक्ति-निवेदिततद्वृत्तान्तपर्याकुलायां भगवत्यां शिवभक्त्यां अकस्मादुपनतसमीहितो-पायतया प्रकृतकार्यसौकर्यातिशयं द्योतयन् विष्कम्भं तुरीयाङ्कार्थोपक्षेपकं दर्शयति, तत इति। तेज इति। दुर्धर्षत्वापादकासाधारणपराक्रमादिजन्यं,

तदिदमद्भुतसंविधानमत्र भवत्याः शिवभक्तेः कस्य मुखेन कर्णपथमवतारयेयम्। सा तावदितः प्रतिनिवृत्तयोर्विरक्तिनिवृत्योः सकाशादत्र चित्रपटदर्शनवृत्तान्तमवकर्ण्य त्रुटितमिह कार्यमिति बहुधा निर्विद्येत। अतः सत्वरमेतदर्थप्रापणे कः समर्थो भवेत्। (*पुरो विलोक्य*) दिष्ट्या सत्संगोऽयमित आगच्छति। य एषः।

धुनीते संतापंदुरितशतचिन्तासमुदितं
तमः स्तोमक्लेशं तरणिरिवसद्यसमुद्यन्।
निरुन्द्धे दुर्वृत्तंनिखिलमपि पर्यन्तविरसं
पथः पुण्यानेव प्रथयति परिक्लेशविधुरान् ॥३॥

---

तेजः प्रतापः वैभवमैश्वर्यं कौशलं नानाविधसामर्थ्यातिशयः उपकरणानि रथगजादीनि सिद्धिषु फलप्राप्तिषु। मुग्धेत्यव्ययम्। व्यर्थानि न साधनानीतियावत्। तद्धा इत्यव्ययम्। सत्यमित्यर्थः। देवान्वयव्यभिचारप्रदर्शनेन विशदयति व्यक्तमिति। महावीरस्यापि राघवस्य उक्तकारणपौष्कल्येऽपि सीतापहारः। रणे खरयुद्धे। 'अपासर्पद्धनुर्मात्रं किञ्चित्त्वरितविक्रमः' इति दूरापसर्पणेन व्यामोहः। इन्द्रजिता नागास्त्रेण ब्रह्मास्त्रेण च बद्धस्य मोहः तथा लक्ष्मणस्य रावणाक्षिप्तया शक्त्या। मोह इत्यादि। एवं पाण्डवानां राज्यभ्रंशेन रणेऽतिवीरस्याप्यर्जुनस्य—

एष कर्णो रणे भाति मध्याह्न इव भास्करः।
निवर्तय रथं कृष्ण जीवन् भद्राणि पश्यति ॥ इति ॥

तथा नित्यसत्यसंघस्यापि युधिष्ठिरस्याश्वत्थामा हत इत्यनृतमित्यादि-द्रष्टव्यम्। तत् तेजः प्रभृति साधनवैयर्थ्यम्। तर्हि कथं जन्तोः समीहितसिद्धिरित्यत आह तन्मन्य इति। दैवेच्छया दैवस्य परमेश्वरस्य इच्छया। तथा च पुरुषस्याभिमतसिद्धौ परमेश्वराज्ञैव कारणम्।

अज्ञो जन्तुरनीशोऽयमात्मनः सुखदुःखयोः।
ईश्वरप्रेरितो गच्छेत् स्वर्गंवाश्च भ्रमेव वा ॥

इति स्मरणादिति निष्कर्षः। तदेवं फले स्वायत्तताभिमानो जनस्य मौढ्य-मात्रविजृम्भित इत्युपसंहरति स्वेनेदमिति। स्वेन आत्मीयेन तेजः प्रभृतिना। अत्र पूर्वार्धे तेजो वैभवेति सामान्येनोक्तस्य व्यक्तं राघवेत्युदाहरणविशेष-प्रदर्शनेन समर्थनाद्विशेषेण सामान्यसमर्थनरूपोऽर्थान्यरन्यासः। तदुत्थापिता च उत्तरार्थे तन्मन्य इत्यत्र कार्यस्य दैवाधीनत्वनिबन्धनेन हेतूत्प्रेक्षा। स्वेनेदमित्यत्र स्वकृतत्वाभिमानिनो मूढा इत्यपह्नवगर्भीकारात् कैतवा-पह्नुतिः। एतेषां चोत्प्रेक्षांगत्वादंगांगीभावसंकरः।

विस्रम्भो विश्वासः प्रणयः स्नेहस्तयोः। आस्पदस्य आश्रयस्य, सुहृदो जीवराजस्य, निर्व्यूढं निष्पन्नं, इष्टाधिकं इष्टात् कथंचिदविद्यायाः नानाविधसमाधानेन वेदारण्यप्रवेशाभ्यर्थनारूपात् अधिकं उत्कृष्टं फलं स्वस्यायासलेशं विना विषयवासनाद्युपदेशेनाविद्यया मदनुरञ्जनाय कुहुना-पेक्षणादिति भावः। एतच्चानुपदमेव सत्सङ्गसमागमे व्यक्तम्। तत्रापि ततोऽपि सार्वविभक्तिकस्तृल्। स्वसमीहितः स्वाभिलषितः योऽर्थः वस्तु प्रशस्तमिति यावत्। धनमिव तथा च प्रशस्तं यत्फलं धनमिव आनन्दहेतु-भूतं वा यत्फलं तत्संपत्तिरिति फलितोऽर्थः। अर्थोऽभिधे रैवस्तु (?) प्रयोजननिवित्तिब्विति उभयत्राप्यमरः।

वस्तुतस्तु स्वसमीहितं विद्यापरिणयनं तदर्थं यत्फलं इदानीं साध्यमविद्यायाः कथंचित् प्रकृतकार्याभिमुख्यं तत्संपत्तिरित्यर्थः। विद्या-सङ्घटनरूपं तदीदृशं फलं विरोधं विना घटयता प्रत्युत विरुद्धानामपि प्रस्तुता-भिमुख्यमेव संपादयता दैवेन कियत्कियदनुकूलमाचरितमिति भावः। तत्र कियत्कियदिति वीप्सार्थः पादत्रयेणोक्तः।

अत्र प्राक् प्रतिमुखसंधौ दृष्टनष्टस्य भक्त्युत्साहबीजस्य उक्तप्रकारेण पुनरुन्मज्जनात् तेन च प्रकृतकार्यप्राप्त्याशानिबन्धनात् गर्भसंधिरुक्तः 'प्राप्त्याशात् प्राप्तिसंभव' इति तल्लक्षणम्। पताकाव्यापिनी कथा' इत्युक्त-पताकाभावस्तु न दोषः। पताका स्यान्नवेति तस्य विकल्पितत्वात्। तस्य च बीजस्य पुनः पुनरन्वेषणमनुपदमेव स्पष्टम्।

(*ततः प्रविशति सत्संगः*)

**सत्संगः**– आदिष्टोऽस्मि तत्रभवत्या शिवभक्त्या 'चित्तशर्म-मुखेन जीवराजवृत्तान्तमवगम्य सपदि परावर्तस्व' इति (*पुरो विलोकयन्*) अयमसौ चित्तशर्मा। यावदेनमुपसर्पामि (*उपसृत्य*) अपि कुशलं वयस्याय।

**चित्तशर्मा**—विशेषतश्च भवत्समागमेन। (*सपरितोषम्*) सखे सत्संग! समये समुपागतोऽसि। श्रृणु तावत्। अहं किल वयस्येन जीवराजेन संदिष्टोऽस्मि।

---

चित्रपटेति। चित्रपटदर्शने सति तदनन्तरं यो वृत्तान्तः समाचार इत्यर्थः। त्रुटितं मध्ये विच्छन्नं निर्विद्येत खिद्येत। एतदर्थेति। अविद्या-समाधानरूपेत्यर्थः।

धुनीते निरस्यति। दुरितेति। दुरितानां महापातकादीनां यच्छतं बाहुल्यं, तेन समुदितं तमःस्तोमेन यःक्लेशः प्रवृत्तानां यथोचितप्रचारालोक-नाद्यभावप्रयुक्तं दुर्वृत्तं दुराचारं पर्यन्तोऽन्तः, तत्र विरसं अनिष्टं पथः मार्गान् पुण्यान् संसारदुःखनिवर्तकान् प्रथयति प्रकाशयति।

सङ्गः सर्वात्मना त्याज्यः सचेत्युक्तं न शक्यते।
सिद्धिस्सह विधातव्यः सन्तः सर्वस्य भेषजम्॥

इति स्मरणादिति भावः। सपदि सद्यः। वयस्यायेति। तादर्थ्ये चतुर्थी। न तु चतुर्थी चाशिषीत्यादिना चतुर्थी प्रकृते कुशलाशिषः विवक्षितत्वाभावात्। किन्तु कुशलप्रश्नः। तथा च त्वदीयं कुशलं अनुवर्तते किमित्यर्थः। विशेषतश्चेति चकारोऽप्यर्थः। न केवलं कुशलं अपि तु सातिशयं कुशलमित्यर्थः। चित्रदर्शनादिति। ममेति शेषः। तत्तदिति वीप्सायां द्विर्वचनम्। ते ते उचिताः चमत्कारिणः। अतिशायिनः। अत एव चतुरतरा अतिशयेन रमणीया उपायास्तैरित्यर्थः। नानाविधविरोधसमाधानोचितेति वा। उपपद्यतां संपद्यताम्।

**सत्सङ्गः**—कथमिव

**चित्तशर्मा**—'वयस्य, चित्रदर्शनात्प्रभृति नितान्तदुर्मनायमाना देवी तत्तदुचितचमत्कारिचतुरतरोपायैरुपसृत्य भवता तथा विधेया यथा सा स्वयमेव मामुपगम्य वेदारण्यगमनमभ्यर्थयेत' इति । तदनु कथमेतदुपपाद्यताम् ।

आर्द्रागसा कथमियं हि मयाभ्युपेया
तादृक्करालहृदयाथ कथं प्रसाद्या ।
भूयः प्रतीपयुवतिस्मृतिकारिणीषु
वेदाटवीषु गमनस्य कथा कथं स्यात् ॥४॥

इत्येवमतिमात्रचिन्तातरलिते मयि तत्क्षणमेव सत्वरोपगतया देव्याः सहचारिण्या कुहनयाभिहितम् । 'आर्य ! भवदाकारणाय भट्टिन्या प्रेषिताहम् इति । तदव[illegible]र्ण्य किमेतदापतितम्' इति मयिकिमपि

---

ननु कात्र कथं ता अविद्यायाश्चित्तशर्माणमन्तरेण कार्याभावादित्यत आह आर्द्रागसेति । सद्यः कृतापराधेन मया देवीसविधे कथं गन्तव्यम् । गत्वा वा महाराजमविगणय्य तत्समक्ष एव तयाधिक्षिपन्त्या देव्याः कथं प्रसादः करणीयः उक्तविधया यद्यनुसरणं प्रसादनमपि दुर्लभम् । तर्हि का कथा वेदारण्यप्रवेशस्येत्याह भूय इत्यादि । एतत् देव्या ममाकारणं उक्तप्रकारेण चिन्ताक्रान्ते मयि देव्या स्वयमाकारणं अप्रत्याख्ययेम् । किमापतितमिति भावः । किमपीति । नानाविधमनर्थजातमाशङ्कमान इत्यर्थः । अखिलमिति देव्या कथितमिति शेषः । वैक्लव्यमनुत्साहं । सुष्ठ्विति सानुकूलत्वादुपक्षेपस्य तयानुमोदनमिति ध्येयम् । कुतोऽपीति । केनापि कारेणेनेत्यर्थः । तच्च कारणं राज्ञः चित्रपटदर्शनप्रयुक्त अविद्याकोपरूपम् । तच्च तथाभीतेन अविद्यां समाधातुमनसा साक्षाद्वक्तुमनुचितमिति कुत इत्युक्तम् । भवत्यपीत्यत्रापि दुर्मनायत इति संबध्यते । तत्र शेषेति प्रथमः इति प्रथमपुरुषः तथा च

किमप्यन्तराशंकमाने 'न किंचिदत्र विचारस्थानमार्यं भवन्तं संमानयितुमत्र भवती समाह्वयति' इति सा कथितवती ।

सत्संगः—ततस्ततः ।

चित्तशर्मा—तदनु 'किमयमसंभावितोपन्यासस्त्वया क्रियते । तदधुना सप्रकारमखिलमावेदय' इत्यनुयुक्ता कुहना यथावृत्तमभिहितवती ।

---

चिरमेव दौर्मनस्यमनुचितम् । तत्परिहर्तुं त्वन्मनोरथसंपत्तये च त्वयैवं कार्यमित्याह मन इत्यादि । आत्मनस्तव किं न पूर्यत इति । त्वयेति शेषः । आत्मनः जीवराजस्येति चार्थः । द्वयोरपि मनोरथपूरणे तव तन्मनोनुरंजनेन संभाविते कथं कोपेनावस्थानमिति भावः । प्रागेवेति । वेदारण्यप्रवेशादिति शेषः । महामात्राः महाप्रमाणा लङ्काला इति यावत् । प्रविष्टे वेदारण्यमिति शेषः । काम्याभिरिति पौण्डरीकादिभिरित्यर्थः । उपासनाभि. मधुविद्यादिभिः तरलीकृते शिथिलप्रयत्ने विद्याविमुख इति यावत् । सेत्स्यति । फलेन संबध्यते ।

अभूताहरणं मार्गो रूपोदाहरणे क्रमः ।<br>
संग्रहश्चानुमानं च त्रोटकाविधले तथा ।।

उद्वेगसंभ्रमाक्षेपा इत्युक्तेषु द्वादशसु गर्भसंध्यंगेषु प्रथमं अभूताहरणं नामाङ्गमिह निबद्धम् ।

उक्तप्रकारेणाविद्यायाश्चित्तशर्मणातिसंधानात् साध्विति सामान्येन सर्वाभिनन्दनं सम्यगिति तूपक्रमाभिनन्दनमिति न पुनरुक्तिः ।

सत्वरमिति । मदागमनसमये तादृगवस्थाया विद्याया विलम्बसहत्वादिति भावः । एतदेव प्रश्ननिरूपणाभ्यां विवृणोति चित्तशर्मेति । आदर्शेति । आदर्शमयी दर्पणमयी भक्तिर्यस्य तदित्यर्थः । कुत इत्यत आह आसन्नेति ।

**सत्संगः**—इदं श्रोतव्यम् ।

**चित्तशर्मा**— नितान्तदुर्मनायमानां देवीं प्रियसखीं विषयवासना रहसीत्थं बोधितवती । यथा-प्रियसखि, त्यज्यतामिदमाकस्मिकं वैक्लव्यम् । श्रृणु तावत् । चित्तशर्मा नामायं जीवस्य नितान्तमन्तरंगः तदस्मिन्नखिलराजकार्यधुरंधरे विरोधो न फलति । अतस्तमिम-मनुरुध्यैव राजा विधेयीकर्तव्यः' । इति ।

**सत्संगः**—सुष्टु कथितं विषयवासनया ।

**चित्तशर्मा**— तदनु देवीसमक्षमुपगम्य निःशङ्कमहमब्रुवम् ।

**सत्संगः**—कथमिव ।

**चित्तशर्मा**—

कुतोऽपि हेतोरतिदुर्मनायते चिरेण राजा चतुरा भवत्यपि ।
मनो निरुध्यैव तदीयमात्मनो मनोरथः संप्रति किं न पूर्यते ॥५॥

तस्य हि चिरादभिलषितो वेदारण्यप्रवेशः । तत्र नित्यसंनिहित-शमदमादिविघटनाय प्रागेव संनिधापनीया महामोहादयो महामात्रा तदनु तत्र भवत्या सह प्रविष्टे राजनि काम्यादिभिः क्रियाभिरुपा-सनाभिश्च तरलीकृते सेत्स्यति समग्रस्ते मनोरथः । इति ।

---

सन्निहितबहुचन्द्रदर्शनभयादित्यर्थः । मुखाम्बुजेनेत्यत्र मुखमम्बुजमिवेत्युपमित-समासः । आसन्नचन्द्रसंबन्धस्य रूपकप्रतिरूपकपक्षत्वात् । आरामेति । कोकिलकूजितभयेनेत्यर्थः । पूर्वनिर्दिष्टसखीप्रतिवचनानुगुण्यात् । अत्रासन्न-चन्द्रमिति समीपे बहुचन्द्रदर्शनादित्यर्थः । तथा च भ्रान्तिमदलंकारः । उत्तरार्धे स्ववचसि कोकिलकूजितत्वभ्रममूलकभयस्य तत्प्रयुक्तगवाक्षपिधानपर्यन्तत्व-निबन्धनात् 'अयं' प्रमत्तमधुपस्तन्मुखं वेत्ति पंकजम् । वल्लालक्षोणिपालेत्या-

**सत्संगः**— सखे, सत्वरमेव निवर्तनीयोऽयमर्थः ।

**चित्तशर्मा**—कुतः ?

**सत्संगः**—निवृत्तिमुखाज्जीवराजगुणानुपवर्ण्य बलवदुत्कण्ठिता विद्या । तथाहि ।

आदर्शभित्ति भजते न विहारगेह-
मासन्नचन्द्रमभितः स्वमुखाम्बुजेन ।
आलीरपि प्रतिवचो गृणती गवाक्ष-
मारामकोकिलभयेन मुहुः पिधत्ते ॥६॥

तदेवमतिमात्रविरहसंतापजनितोन्मादतरलिता सा

**चित्तशर्मा**— (*सहर्षम्*) एवमन्योऽन्यानुरागे सति' सुकरमेव कार्यशेषं तर्कयामि ।

**सत्संगः**—सखे, भवन्तमधिकृत्य किंचिदिव संदिहानेन मया कदाचिदत्र भवती शिवभक्तिरभिहिता 'सांप्रतमस्माकमतिविधेयोऽपि चित्तशर्मा चिरतरमविद्यानुबन्धी कथमस्मदभिमतकार्यानुकूलो भवेत्' इति । तदनु निजहृदयनिर्विशेषमेव त्वामिह मन्यमाना भगवती-कथितवती-स एव कार्यमिदं प्रस्तुतमभिनिर्वर्तयिष्यति ।' इति ।

---

दाविव भ्रान्तिमान् । अनयोश्च संसृष्टिः । उन्मादतरलिता चित्तविभ्रमचंचला सा विद्या । कार्यशेषमिति । वेदारण्यप्राप्तिपर्यन्ते कार्ये दैवेन साधिते परिशिष्टं विद्यापरिणयनरूपं ईषत्करमिति निश्चिनोमीत्यर्थः ।

**चित्तशर्मा**- परेङ्गितपरिज्ञानप्रवणहृदया हि महानुभावा भक्तिः । (*सस्मितम्*) अये सत्सङ्ग, सत्यमहमेवं शङ्कनीयो भवेयम् । अत्र भवती यदि न मामनुगृह्णीयात् । संप्रति तु मदध्यवसायः श्रूयताम् —

भुंजानः सुचिरादभेदविधया भोगानहं स्वामिनो
जीवस्याभ्युदयाय वर्ष्म च तृणप्रायं त्यजाम्यत्र तु ।
सङ्ग्रामे समुपागते निजभुजव्याधूतखड्गाहुति-
च्छिन्नस्वीयसनाभिवर्मविपिनः कर्णः प्रमाणं मम ॥७॥

किं च—

गोत्रानुबन्धममतादिषु निर्विशेष-
स्तत्तादृशः कुलमहत्तर एव भीष्मः ।
स्वामी सुयोधन इति द्रुतमाजि भूमौ
शस्त्रास्त्रवर्षपरुषोऽजनि पाण्डवेषु ॥८॥

अतस्तदनुग्रहभाजनमन्यथा न शंकनीयः । सोऽहमचिरेण राजानमविद्यया सह वेदारण्यं प्रवेशयामि । तदनु तत्र कामनानुविद्धतत्तदुपासनाभिरविद्यापि राजानं प्रलोभयेत । तदनन्तरकरणीये भगवती प्रमाणम् ।

**सत्सङ्गः**—अत्र भवती शिवभक्तिस्ताभिरेवोपासनाभिः साकमनतिभिन्नाया दहरविद्यायाः पदान्तर एव विद्यामपि राजमात्रदृश्यतयानुप्रवेशयितुमध्यवस्यति ।

---

सांप्रतम् अधुना । चिरतरमिति । अत्र चित्तशर्मसत्संगाभ्यामन्योन्यं तत्वकथनात् मार्गो नाम द्वितीयमङ्गम् । तल्लक्षणन्तु 'मार्गस्तत्त्वानुकीर्तनम्' इति । प्रवण आयत्त हृदयमस्या इत्यर्थः । अत्र भवती शिवभक्तिः । अभ्युदयाय

**चित्तशर्मा**—अतः सत्वरमिममुदन्तमावेदयितुमत्रभवती शिवभक्तिरुपगम्यताम् । अहमपि भद्रशालाभ्यन्तरे मामेवं सुचिरं प्रतीक्षमाणस्य वयस्यस्य सकाशं गच्छामि ।

*(इति निष्क्रान्तौ)*

*विष्कम्भः*

---

श्रेयसे । तादर्थ्ये चतुर्थी । वर्ष्म स्वशरीरं तृणप्रायं तृणमिव । तथा च सचिवस्य मम महति राज्ञः श्रेयसि शरीरत्यागोऽपि युज्यते । किमुत स्वीयानां त्याग इति भावः । 'मन एव मनुष्याणां कारणं बन्धमोक्षयोः । मनोनाशे महोदय' इति शास्त्रार्थे कवेः कटाक्षः ।।

अत्राभेद विधयेति भुंजान इति च जीवान्तः करणयोरितरेतराध्यासनिबन्धनाभेदः तद्धर्माणां च कर्तृत्वादीनामाध्यासिकाभेदव्यवहार विवक्षितः । सर्वमिदं युष्मदस्मत्प्रत्ययगोचरयोरित्यादिनाध्यासमाक्षिप्य तथाप्यन्योन्यस्मिन्नन्योन्यात्मकतामित्यारभ्याहमिदं ममेदमिति नैसर्गिकोऽयं लोकव्यवहार इत्यन्तेन भाष्यसंदर्भेण व्यक्तीकृतम् ।

ननु स्वजनविषये वचनमिदं नैर्घृण्यापादकतया जुगुप्सितमित्याशङ्क्य स्वामिकार्यव्यग्राणां नायं दोष इति प्रसिद्धोदाहरणप्रदर्शनेन दृष्टान्तालंकारविधया परिहरति सङ्ग्राम इति । सनाभयः दायादाः गोत्रं कुलं अनुबन्धः, भ्रातृत्वपुत्रत्वादि तैर्या ममताभिमानः । आदिशब्देन स्नेहादिर्निविशेषः बुद्धिकृतविशेषरहितः सन् शत्रुष्विव शस्त्राण्यस्त्राण्यपि तथा तथातिक्रूर स्वामि दुर्योधनजयाय स एव प्रमाणमिति भावः । तदिति तत्पदेन शिवभक्तिरुक्ता । अनतिभिन्नामिति द्विविधा दहरविद्यासगुणनिर्मुक्तभेदात् ।

तत्र काल्पनिकापहतपाप्मत्वादिकतिपय गुणविशिष्टा सगुणा सैव चिरमभ्यस्यमाना ज्ञानप्रसादेन विशुद्धसत्वस्ततस्तु तं पश्यते । निष्कल

*(ततः प्रविशति यथानिर्दिष्टो राजा)*

**राजा**—*(स्मरणमभिनीय)* हन्त, मया निजकार्यनिर्वर्तनैकचेतसा महदनुचितं कृतम् । यदेष वयस्यो बुभुक्षितव्याघ्रीपरिसरमभिवर्धितो हरिण शाव इव नितान्तपरिकुपिताया देव्याः सविधमार्द्रापराधो-गमितः । तत्र कति कति परिभवाननुभूय कथमिव परिखिद्यते वा न जानामि ।

*(ततः प्रविशति चित्तशर्मा)*

**चित्तशर्मा**—हन्त वयस्योऽयमतिमात्रविद्याविरहतापेन परिभूयते । तथाहि—

वीक्षानिर्विषया निकाममलसप्रान्ते च कान्ते दृशौ
शश्वत्किंच मितैर्वृतः परिजनैरेकान्तमासेवते ।
नास्था वस्तुषु वल्लभेषु मनसो निष्ठा न कुत्रापि वा
तेजोमात्रससारमूर्तिरधुना जागर्ति जीवो विभुः ॥६॥

यावदेनमुपसर्पामि । *(उपसृत्य)* विजयतां देवः ।

---

ध्यायमानः यमेवैष वृणुते तेन लभ्यस्तस्यैष आत्मा वृणुते तनुं स्वामित्युक्तरीत्या सगुणोपासनप्रसन्नपरमेश्वरवस्तुसत्वरूपविषयाखण्डाकारवृत्तिरूपा निर्गुणविद्यानां णमते । अत एव कल्पतरौ—

वशीकृते मनस्येषा सगुणब्रह्मशीलनात् ।
तदेवाविर्भवेत् साक्षादपेतोपाधिकल्पनम् ॥

इत्युक्तम् । एवं च तत्परिणामत्वेन ततोऽनतिभिन्नामि · · · · दान्तर इति च श्लिष्टमिति द्रष्टव्यम् । भद्रशाला कल्याणशाला । यथानिर्दिष्ट इति येन प्रकारेण विशिष्टः प्राङ्निर्दिष्ट इत्यर्थः, सुप्सुपेति समासः । निजं स्वीयं

**राजा**—*(दृष्ट्वा सपरितोषम्)* वयस्य, प्रसन्न इव लक्ष्यसे। किमस्ति कश्चिद्विशेषः।

**चित्तशर्मा**—अथ किम् ?

**राजा**—कथमिव।

*(चित्तशर्मा किंचिदिवोपसर्पन्, इदमित्थमिति वृत्तमखिलमर्थमानुपूर्व्या कथयति)*

**राजा**—वयस्य, किमत्र देवी संनिदधीत।

**चित्तशर्मा**—सह परिवारैरुपगतैव।

*(ततः प्रविशति विषयवासनया प्रवृत्त्या च सहाविद्या)*

**अविद्या**—*(सनिर्वेदम्)* सखि विषयवासने, बहुप्रकारमनुसृतोऽपि देवः सर्वथा न यथा पुरमस्मासु प्रसीदति। कर्तव्यस्तु समुदाचारः। *(इति कतिचित्पदानि गत्वा पुरोऽवलोक्य)* कथमत्रैव चित्तशर्मणा विविक्तमध्यास्ते देवः। यावदेनमुपसर्पामि *(उपसृत्य)* विजयतां देवः।

---

यत्कार्य तन्निवर्तने एकं मुख्यं चेतो यस्येत्यर्थः। वयस्यः सखा चित्तशर्मा हरिणशावः हरिणशिशुः आर्द्रापराध इति। प्रत्युतेति शेषः। तथाचोपमानमृगशावापेक्षया वर्ण्यविशेषनिबन्धनाद्व्यतिरेकः। परिभवान् तिरस्कारान्। वीक्षा चाक्षुषज्ञानम् निर्विषया दानाद्यभावद्विषयरहितेत्यर्थः।

अलसेति। निर्वेदादलसे असमर्थे मितैः स्वल्पैः वस्तुषु विषयेषु। अत एवाह वल्लभेषु दयितेषु प्रागित्यर्थः। निष्ठा ऐकाग्र्यं तेजोमात्रेण। ससारा साररहिता मूर्तिरस्येत्यर्थः। जागर्ति प्रकाशते।

अथकिमित्यंगीकारे। वृत्तमखिलमिति। वेदारण्यप्रवेशोपायप्रकारमित्यर्थः। वयस्य किमत्र इत्यनेनोक्तविधासमागमनवितर्कणाद्रूपवितर्कवद्वाक्य-

**राजा**—इत आस्यताम् । *(इत्यासनं निर्दिशति)*

**चित्तशर्मा**—देवी, दिष्ट्या वर्धसे ।

**विषयवासना**—वर्धतां महाराजः ।

*(राजा चित्तशर्माणं संज्ञापयति)*

**चित्तशर्मा**—देव, भवता सह वेदारण्यविहाराय बलवदुत्कण्ठिता देवी । तत्कुतो विलम्बसे ।

---

मित्युक्तरूपं नाम तृतीयमंगम् । उपगतैव प्राप्तैवेत्यर्थः । सह परिवारैरित्यनेन राजतर्कितावियासन्निधाने उत्कर्षाभिधानात् सोत्कर्षस्स्यादुदाहृतिरित्युक्तमुदाहरणं नाम तुरीयमंगम् । समुदाचारः लोकयात्रा । विविक्तं विजनं देशमित्यर्थः । दिष्ट्या भाग्येन संज्ञापयति इंगितैर्बोधयतीत्यर्थः । अनेनाविद्यातिसंधानात् अधीबलं नाम पंचममंगम् । अधीवलमती सन्धिरिति तल्लक्षणम् ।

का गतिरिति । राज्ञः वेदारण्यप्रवेशे सति स्वानर्थं दृढीकरणं भवतीति निर्वेदोक्तिः । बलवत्प्रकामम् । अत्र राज्ञः चिराभिलषितवेदारण्यप्राप्त्याशानुगुणाविद्याभिलाषवर्णनात् क्रमो नाम षष्ठमङ्गम् । आदेशय निवेदय । इत इति । देव आयात्विध्याहारेण । अर्धमार्गे मार्गमध्ये अर्धशब्दस्य पुंलिंगस्य समासः ।

ननु नपुंसकस्य, तस्य संमासवाचित्वेन तस्यैव समास इति निर्बन्धे प्रमाणाभावात् । पुंलिगस्यतु एकदेशपरत्वादिति ध्येयम् । असारमधिष्ठानसत्तातिरेकेण सत्तारहितमित्यर्थः । तृणादिवदिति । उपेक्षाविषयत्वं साधारणो धर्मः ।

आदिशब्देन लोष्ठादि पश्यति जानाति । दृश्येति दृशः नित्यस्वप्रकाशचैतन्यस्य विषयो वियदादिः तस्य जालं समूहम् । तथा च मिथ्याभूतं जगदिति जानन् सर्वमुपेक्षत इति भावः । उक्तमर्थमात्मानन्दानुभवकथनेन दृढयति ।

**राजा**—यदभिलषितं देव्यै । *इति सर्वे उत्तिष्ठन्ति*)

**देवी**—(*स्वगतम्*) का गतिः ।

**राजा**—कः कोऽत्र भोः ।

(*प्रविश्य*)

**दौवारिकः**—अहमस्मि ।

**राजा**—संकल्प, वेदारण्यमार्गमादेशय ।

**संकल्पः**—इत इतो देवः ।

(*सर्वे वेदारण्यगमनं नाटयन्ति*)

**राजा**—(*वामपार्श्वतः कर्णं दत्वा*) अये चित्तशर्मन् । अत्र केषामपि परस्परालाप इव श्रूयते ।

---

प्रतिविक्षुः प्रवेष्टुमिच्छुः । तदेनमिति । तत्र जीवराजमित्यर्थः । अपयाद्विरुद्धमार्गादित्यर्थः । सतां शोभनेन विफल इति वस्तुविचारेण पाषण्डतिरस्कारादिति भावः । तेनानुमानं नाम सप्तममंगम । 'अभ्यूहोलिंगतोऽनुमा' इति तद्विदः । न च द्वैताश्रयेण सत्यज्ञानसुखस्वरूपपरमात्मविषयाखण्डाकारवृत्तप्रतिबिम्बितनित्यचैतन्यरूपैव विद्या किमिति जीवराजेन परिणेतव्या । ततोऽन्यासामपि चार्वाकाद्यवैदिकवैदिकैकदेशिकापालिकाद्यभिमतानां विद्यानां संभवादित्याशंक्य तत्तत्सिद्धान्तानां लोकानुभवशास्त्रपरस्परविरोधादिवक्ष्यमाणदोषदुष्टत्वेन हेयत्वात् । वस्तुतो विचार्यमाणे तु तत्तन्मते द्वैतवाद्यभिमतकतिपयपदार्थमात्रान्यथा भावाभ्युपगमेन मतान्तराणां तदधस्तनपर्वनिवेशित्वस्य । "त्रयी सांख्यं योगः पशुपतिमतं वैष्णवमिति । प्रभिन्ने प्रस्थाने परमदमिदः पथ्यमिति च रुचीनां वैचित्र्यादृजुकुटिलनानापयजुषां नृणामेको गम्यस्त्वमसि पयसामर्णव इव ।।" इति शिवरहस्योक्तन्यायेन अग्रे तत्तन्मतोपसंहारे प्रदर्शयिष्यमाणन्यायेन च स्फुटत्वादिति परिहारमभिप्रेत्य यावत्परमतं न

चित्तशर्मा—(स्मरणमभिनीय । किंचिदिवोपसृत्य । जनान्तिकम् ।) वयस्य 'देव्या हितान्वेषिभिर्मोहादिभिरधर्ममार्गे भवत्प्रलोभनाय लोकायतिकादिपाषण्डसिद्धान्ताः संनिवेशिताः' इति वस्तुविचारेण संप्रत्येव मे कथितम् । प्रायस्त एते भवेयुः (पुरो विलोक्य) स एषः ।

असारमेतज्जगदित्यवेत्य तृणादिवत्पश्यति दृश्यजालम् ।
अन्तश्चिरानन्दरसानुभूतिमंगैः समुद्यत्पुलकैर्व्यनक्ति ।।१०।।

---

निराक्रियते तावत् स्वगतमप्रतिष्ठितं भवतीति न्यायात् स्वाभिमतमतपरिशेषणाय मतान्तराण्युत्थाप्य निरस्यति । ततः प्रविशन्तीति ।

तत्र तेषु मध्ये लोकायतिकेति प्रत्यक्षमात्रप्रामाण्यवादी चार्वाक एव लोकायतिकपर्यायः ।

न क्लेशेति । निषेकादिश्मशानान्तस्य ब्राह्मे मुहूर्ते उत्थाय धर्मार्थावनुचिन्तयेत् । प्रदोषपश्चिमौ यामौ वेदाभ्यासेन योजयेत् । यामद्वयं शयानस्तु ब्रह्मभूयाय कल्पत इत्यादिशास्त्रात् प्रतिदिनं प्रबोधातिशयनान्तस्य च दैनं दिनकर्मबन्धस्याभावात् न क्लेशलेशलेशोऽपि । किन्तु सर्वत्र परदारमद्यादिविषयेऽप्यनुपरोधः । अप्रतिबन्धः यथेष्ट भोग एव । एवं सत्यपि मूढाः किमिति मतमिदं नाद्रियन्ते । हन्तेत्याश्चर्ये । तथा च

"यावज्जीवेत् सुखं जीवेदस्ति मृत्योरगोचरः ।
भस्मीभूतस्य देहस्य पुनरागमनं कुतः ।। इति

बृहस्पतिवचनानुसारेण लोकसिद्धं ग्राह्यं न त्वलौकिकमपि ग्राह्यम् । प्रत्यक्षान्यप्रमाणस्य गगनकुसुमकल्पत्वादित्युक्तं भवति । यद्वा नक्लेशेति । गर्भिकर्मीकृतनैकनीवृतेत्यादिवन्नशब्दस्य समासः । न तु नञः । तच्च भोगविशेषणम् । ततश्च क्लेशानुबिद्धं प्रत्यक्षसुखं न पुरुषार्थ इति शंकनीयम् । क्लेशविनिर्मुक्तस्य सुखमात्रस्य पुरुषार्थत्वसंभवात् । यथा हि मत्स्यार्थी

(*ततः प्रविशति वस्तुविचारः*)

**वस्तुविचारः**—आदिष्टोऽस्मि तत्र भवत्या शिवभक्त्या 'वत्स वस्तुविचार, संप्रति जीवराजो वेदारण्यं प्रविविक्षुरिति श्रूयते। तदेनमपथान्निवर्त्य सतैव पथा समानेतुमस्य परिसरोऽवगन्तव्यः। इति। (*पुरो विलोक्य*) स एष जीवराजः। यावदेनमुपसर्पामि। (*उपसर्पति*)।

(*राजा चित्तशर्मणा सह प्रणमति*)

**वस्तुविचारः**—सिद्धसंकल्पौ भूयास्ताम्।

**अविद्या**—(*सविषादम् स्वगतम्।*)। हन्त विफलो मे मनोरथः पाषण्डेषु।

(*ततः प्रविशन्ति पाषण्डसिद्धान्ताः*)

**लोकायतिकसिद्धान्तः**—

न क्लेशलेशयोगो भोगोऽनुपरोध एव सर्वत्र।
इति सति किं न रमन्ते मन्दधियो मामके तन्त्रे ॥११॥

इति परिक्रामति।

---

सशल्कान् सकण्टकान् मत्स्यानुपादत्ते स यावदादेयं तावदादाय निवर्तते। यथा वा धान्यार्थी सपलालानि धान्यान्याहरति स यावदादेयं तावदादाय निवर्तते तस्मान्नानुकूलवेदनीयं सुखं त्यक्तुमुचितम्। नहि भिक्षुकाः सन्तीति स्थाल्यो नाधिश्रियन्त इति न्यायात्। तदाहुः—

त्याज्यं सुखं विषयसंगमजन्म पुंसाम्
दुःखोपसृष्टमिति मूर्खविचारणैषा।
व्रीहिं जिहासति सितोत्तमतण्डुलाढ्यान्
को नाम भोस्तुषकणोपहतान् हितार्थी ॥इति॥

**चित्तशर्मा**—(*राजानं प्रति*) अत्रास्यायमाशयः। प्रत्यक्षमेव प्रमाणम्, अदृष्टचरं तु नास्त्येव। तथा च।

पृथिव्यापो वह्निः पवन इति सत्याः परममी
तदेषां संघातो भवति वपुरात्मा बहुविधः।
समष्टेस्ताम्बूलादरुणिमवदुन्मीलति मतिः
सुखादिव्यापारैरुपनमति धर्मादि तु मृषा ॥१२॥
अतः देशः कालोऽथ जातिः कुलमकुलमियं स्वा परेत्यादि हेतो-
र्वर्ज्यावर्ज्येति मिथ्याकुहकविरचितां यन्त्रणामन्तरेण।
आद्ये खाद्येऽथ पेयेऽप्यनियमिततया काममापुष्य गात्रं
दृष्ट्वा मिष्टामनाप्य स्मरमदमुदितां भोग एवाभ्युपेयः ॥१३॥ इति।

**चित्तशर्मा**—(*सभ्रूभंगम्*) वयस्य, लोकायतिमतमिदमतिरमणीयं प्रतीयते। यदत्र न विधिर्ननिषेधो न धर्माधर्मौ नास्तिपरलोकः इत्यादिना प्रत्यक्षसिद्धविषयाभिरतिनिरातंका हि प्रतीयते।

---

ननु प्रत्यक्षमेवेत्ययुक्तम्। स्वर्गनरकादिज्ञानार्थं शब्दादिप्रमाणान्तरस्याङ्गीकर्तव्यत्वादित्यत आह अदृष्टचरमिति। अनुमानादिपरोक्षप्रमाणगम्यं किमपि नास्ति तन्मते प्रमाणान्तरस्यैवाभावादिति भावः। फलितमाह तथा चेति। संघातः समुदायः। वपुः शरीरमेवात्मा। अत एव स्थूलोऽहमित्यादि सामानाधिकरण्यमुपपद्यत इति तस्यैव ध्वंसो मोक्ष इति भावः। बहुविध पशुपक्षिमनुष्यादिनानाप्रकारः।

ननु पृथिव्यादीनां गन्धादिमात्रगुणकत्वात् कथं ज्ञानादिकमित्यत आह समष्टेरिति। ताम्बूलादिति।

अयं भावः। पृथिव्यादेरेकैकस्य गन्धादिमात्रगुणकत्वेऽपि तत्समुदायस्य ज्ञानादिजनकत्वं संभवति। यथा ताम्बूलदलपूगशकलचूर्णेषु प्रत्येकलौहित्यराहित्येऽपि त्रयाणां मेलेने लौहित्यमिति। सुखादीत्यादिना दुःखादिगृह्यते। व्यापारैरंगनालिंगनकण्टकतोदनादिभिः धर्मादीत्यादिपदेनाधर्मस्वर्गनरकादिगृह्यते। अदृष्टस्य दृष्टत्वे व्याघातः सर्वथैवादृष्टत्वे चासत्वमेव शशशृंगवदिति

**अविद्या**—(*स्वगतं सहर्षम्*) कथमस्मदीय एव चित्तशर्मा ।

(*राजा सस्मितं वस्तुविचारं पश्यति*)

**वस्तुविचारः**—(*सोद्वेगम् स्वगतम्*) प्रमादः प्रमादः । पर्यायेण सत्पथमेनं नयेयम् । (*प्रकाशम्*) किमये चित्तशर्मन् अनभिज्ञ इवालपसि । वयं किम् 'इदमखिलमस्ति' इत्यबोचाम । किमपि नास्ति यत्साक्षात्' इति प्रत्यक्षसिद्धार्थाभिरतिरनातङ्केति ब्रूमहे ।

---

भावः । देशः विविक्तादिः । कालः संध्याहारादिव्यतिरिक्तः । जातिः ब्रह्मक्षत्रादिः कुलं ग्राह्यत्वे अकुलं वर्ज्यत्वे हेतुः । तथा च स्त्रीणां देशादिहेतुकवर्ज्यावर्ज्यत्वस्मरणं दुर्बलवञ्चकपरिकल्पितम् । हितमितमध्याशनमद्यमांसादिवर्ज्यावर्ज्यत्वस्मृतिरपि मन्दाग्निगुल्मादि रोगरुग्ण कल्पितेति वनितामात्रदर्शनं यथेष्टं भोग एव युक्त इत्यर्थः ।

यदत्रेति । उक्तप्रकारेणेति शेषः विधिः इदं कर्तव्यमितिप्रवर्तकः शब्दः । निषेधः न कर्तव्यमिति निवर्तकः शब्दः । धर्मः सुखहेतुः । अधर्मः दुःखहेतुः ।

गुणः परलोकः स्वर्गनरकादिः । विषये कामिन्यादौ अभिरतिः रुचिः निरातङ्कापरलोक भयरहिता । तथा चात्र मते धर्माधर्मयोरभावात् प्रपंचवैचित्र्ये स्वभाव एव कारणमिति ध्येयम् । तदेतत्सर्वं मूलवचनोपन्यासेन दर्शयामः ।

न कल्प्यौ सुखदुखाभ्यां धर्माधर्मौ परैरिह ।
स्वभावेन सुखी दुःखी जनोऽन्यः नैव कारणम् ॥
शिखिनश्चित्रयेत्येको वा कोकिलान् कः प्रकूजयेत् ।
स्वभावव्यतिरेकेण विद्यते नास्य कारणम् ॥
स्थूलोऽयं तरुणो वृद्धो युवेत्यादिविशेषणैः ।
विशिष्टो देह एवात्मा न ततोऽन्यो विलक्षणः ॥

शापादिवशादिहार्थान्तरभ्रमेण विशृंखलविषयाभिरतिस्तु नरकाय भवति। तथा च तस्य प्रत्यक्षप्रमितार्थसत्यत्ववादोऽप्येतदभिप्रायक एव। "नास्ति परलोकः" इत्यादीनि च ब्रह्मव्यतिरिक्तस्य सर्वस्याप्यभावोपलक्षकानि। तस्य देहात्मत्ववादोऽप्यन्नमयकोशस्यात्मोपलक्षकत्वनिबन्धन इति सर्वमद्वैतपर्यवसाय्येव।

**राजा**—(*सशिरःकम्पं पुरोऽवलोक्य*)

---

जडभूतविकारेषु चैतन्यं यत्तु दृश्यते।
ताम्बूलपूगचूर्णानां योगाद्राग इवोत्थितम्॥
इह लोकात्परो नान्यत् स्वर्गोऽस्ति नरको न च।
शिवलोकादयो मूढैः कल्प्यन्तेऽन्यैः प्रतारकैः॥
स्वर्गानुभूतिर्दृष्टा हि द्व्यष्टवर्षवधूरतिः।
सूक्ष्मवस्त्रसुगन्धस्रक् चन्दनादिविशेषणाः॥
नरकानुभवो वैरिशस्त्रव्याध्याद्युपद्रवः।
मोक्षस्तु मरणं प्राणसंज्ञावायुनिवर्तनम्॥
अतस्तदर्थं नायासं कर्तुमर्हति पण्डितः।
तपोभिरुपवासाद्यैर्मूढ एव प्रशुष्यति॥
पातिव्रत्यादिसंकेतो बुद्धिमद्दुर्बलैः कृतः।
सुवर्णभूमिदानानि मृष्टामन्त्रणभोजनम्।
क्षुत्क्षामकुक्षिभिर्लोके दरिद्रैरुपवर्णितम्॥
देवालयप्रपासत्रकूपारामादिकर्मणाम्।
प्रशंसां कुर्वते नित्यं पान्था एव न चापरे॥
अग्निहोत्रं त्रयो वेदास्त्रिपुण्ड्रं भस्मकुण्ठनम्।
बुद्धिपौरुषहीनानां जीविकेति बृहस्पतिः॥
कृषिगोरक्षवाणिज्यदण्डनीत्यादिभिर्बुधः।
दृष्टैरेव सुखोपायैर्भोगान् ननु भवेद्भुवि।

**परिहितकाषायवासाः परिहृतहिंसः समस्तभूतेषु ।**
**अभ्येति भिक्षुवेषः कच्छविहीनोऽत्र बुद्धसिद्धान्तः ॥१४॥**

**बुद्धः**—अहो मन्दमेधसः स्वानुभवविरुद्धो व्यवहारः ।

**प्रत्यक्षतो यत्प्रमितं कदापि तदेव सत्यं न ततोऽन्यदस्ति ।**
**इत्येव बुद्धिर्यदि तर्हि कस्मादपत्यहेतोरबलामुपैति ॥१५॥**

---

इति ।

अस्मदीयः अस्मत्पक्षपातीत्यर्थः । प्रमादः अनवहितम् प्रकारान्तरेणेत्यर्थः । देव्यनुरोधादिति भावः । सतां पन्थाः सत्पथं ऋक्पूरित्यच् । काक्वाक्षिप्तं विस्पष्टमाचष्टे किमपीति । नन्वयुक्तोऽयं साम्योपन्यास; चार्वाकेण प्रात्यक्षिकप्रपंचसत्तांगीकारात् । तन्मते तदन्यस्य शशश्रृंगायमानत्वात्, स्वसिद्धान्तविरोधाच्च । ब्रह्मवादिभिरसद्वा निषेधेन विवर्तवादांगीकारात्तथाप्यापतत उक्तिसाम्यमात्रमिदं चार्वाकेण परोक्षं यदस्त्वपहुतमसादिति तत्तथैव, किन्तु प्रत्यक्षं परोक्षं वा किमपि नास्ति स्वतः सत्ताशून्य इति प्रपञ्चस्य सत्ताशून्यत्वेव साम्योक्तिरिति ध्येयम् । किन्तु, तेन प्रत्यक्षाप्रत्यक्षमुग्धबुद्धि नान्यथा गृहीतमित्याह यत्साक्षदिति। निरपेक्षं प्रत्यक्षं ब्रह्मैव तदन्यस्य त्वन्तःकरणवृत्तिद्वारा तत्तादात्म्यापत्या प्रत्यक्षत्वं नान्यथेत्यत्र विस्तरः । शापादिवशादिति शापः सूतसंहितायाम्—

पांचरात्रेषु कापाल तथा कालमुखेषु च ।
शाक्ते च दीक्षिता यूयं भवतः ब्राह्मणाधमाः ॥
बौद्ध चार्हमते चैव तथा पाशुपतेपि च ।
शाम्भवे दीक्षिता यूयं भवता ब्राह्मणाधमाः ।
पाषण्डेषु तथान्येषु मार्गेस्त्वश्रौतकेषु च ।
श्रद्धया दीक्षिता यूयं भवता ब्राह्मणाधमाः ॥

इति गौतमीयशापप्रकरणे दर्शितः। आदिशब्देन नास्तिक्यापादकानि अभक्ष्यभक्षणादीनि पातकानि गृह्यन्ते । "इह यत्साक्षदित्यादि श्रुतौ । अर्थान्तरेति । प्रत्यक्षसिद्धपृथिव्यादिकमस्ति । परोक्षं तु न किमपीत्याद्यर्थ-

**चार्वाकः**—अये बुद्धसिद्धान्त, किमनुमानमपि ते प्रमाणम् ।

**बुद्धः**— कः सन्देहः ।

ऊर्ध्वं चाधश्च नानाविधभुवनभिदा नामरूपव्यवस्था-
मुर्व्यामाचक्रवालाद्वनगिरिसरितामर्णवानां च तत्वम् ।
ज्योतिश्चक्रोपरागस्थितिगतिसदसद्भावविभोग्यानि येन
प्रत्यक्षं दर्शयेऽहं क इव विवदतामत्र हन्तानुमाने ।।१६।।

अतः

प्रत्यक्षमनुमानं च प्रमाणं मे न संशयः ।
अस्ति स्वर्गश्च नरको धर्मोऽधर्मश्च कारणम् ।।१७।।

परं तु परिदृश्यमानमखिलमपि क्षणक्षणविलक्षणतया क्षणिकमेव ।

---

कमित्यर्थः। तदेवं तद्व्यवहारस्य भ्रमनिबन्धनत्वमुक्त्वा स्वाविरोधेन समादधान उपसंहरते। तथाचेति। एतदिति। यदेव प्रत्यक्षमिति श्रुतिप्रमितमेतत्। ब्रह्माभिप्रायकमित्यर्थः अभावेनेति। अधिष्ठानब्रह्मव्यतिरेकेणेति शेषः। अन्यथानिर्वचनीयवादविरोधापत्तेः। देहेति। देह एव आत्मेतिवाद इति यावत्। अन्नमयेति। तैत्तरीयोपनिषदि सूक्ष्मारुन्धतोन्यायेन दुरधिगमे प्रत्यगभिन्ने सर्वान्तरे ब्रह्मणि श्रोत्रबुध्यवतारायान्नं ब्रह्मेति, प्राणो ब्रह्मेति व्यजनादित्यादिनान्नमयादिकोशपंचकमुपलक्षकत्वेन निर्दिष्टं ब्रह्मत्वेन च बोधितमिति तन्निबन्धनो भ्रम इति सर्वमद्वैतवादाविरोधीत्यर्थः।

एवं स्वयमविरोधेन समाधाय परमतेन दूषयितुं बुद्धिमुत्थापयति राजेति। शिरःकम्पः पूर्वोक्तानुमोदने विकृतवेषालोकनेन सावज्ञानुमोदने वा बोध्यः। पश्याम्यहं भिक्षवो दिव्येन चक्षुषे तु बुद्धागमे शिष्याणां भिक्षवं इति संबोधनान्तद्रूपं बुद्धं दर्शयति। परिहितेति। न हिंस्याव् सर्वा भूतानीति तन्मते हिंसानिषेधादिति भावः। कच्छमात्रविहोनाच्छदनवान् बुद्धः आच्छादनलेशविहीनो दिगम्बर इति भेदं बोधयितुं कच्छविहीन इत्युक्तम्।

पश्य तावत्—

क्षणादूर्ध्वं न तिष्ठन्ति शरीरेन्द्रियबुद्धयः ।
दीपार्चिरिव वर्तन्ते स्कन्धाः क्षणविलम्बिनः ॥१८॥
प्रत्यक्षं जायते विश्वं जातं जातं प्रणश्यति ।
नष्टं नावर्तते किन्तु जायते च पुनः पुनः ॥१९॥

तथा च—

---

**मन्दमेधस** इति नित्यमसुच् प्रजामेधयोरित्यसुच् । तर्हीति । न हि वनितासमागमोऽप्यपहेतुरिति प्रत्यक्षमस्तीति भावः । नानेति भूर्भुवस्वरित्यादि प्रत्यक्षमस्तीति भावः । **नानेति** भूर्भुवस्वरित्यादि उपरि लोकाः सप्त, अतलवितलादयोऽप्यधोलोकाः सप्तेति नानाविधानां भुवनानां भिदा भेदास्तेषां नामानि स्वरूपाणि तत्र तत्र तत्तत्पदार्थव्यवस्थामित्यर्थः । उर्व्यामिति । अन्तत इति शेषः । ज्योतिश्चक्रस्य आदित्यादेः उपरागजन्यमेलनस्थितिः मेषादिराशिषु गतिः पूर्वराशिं परित्यज्य राश्यन्तरगमनम् । तेन सत् अभ्युदयकारी, असत् अनर्थकारी भावीत्युपलक्षणं वर्तमानमतीतं चेत्यपि द्रष्टव्यम् । **प्रत्यक्षमिति** । करतलामलकवदसंदिग्धमित्यर्थः । एतावता फलितमाह अत इति । तदाहुः ।

**बौद्धशास्त्र** प्रमेयं तु प्रमाणं द्विविधं मतम् ।

प्रत्यक्षमनुमानं च'—इति ।

प्रत्यक्षमाह—

कल्पनाप्रौढमभ्रान्तं प्रत्यक्षं कल्पना पुनः ।
न जातिगुणद्रव्यक्रियायोगेन पञ्चधा ॥

लिंगदर्शनतो ज्ञानं लिङ्गिन्यत्रानुमा मता । इति ।

कर्मोत्तेजितवासनाकृतजगज्जन्मप्रवाहो यथा
जालान्तः प्रसृतार्कतेजसि रजस्तोमस्तथा भासते ।
धारावाहिनि बोध एव गलति ज्ञानेन सा वासना
पश्चान्निर्विषयोऽमलश्च स भवन्नात्मापवर्गो मतः ॥२०॥

अत्र 'बाह्यार्थः प्रत्यक्षसिद्ध' इति **वैभासिको** जग्राह । बोधाकारानुमेयो बाह्यार्थः' इति **सौत्रान्तिकः** । बुद्धिमात्रमर्थो न कश्चिदपि बाह्यः' इति **योगाचारः** न बुद्धिमात्रमपि शून्यमेव तत्वम्' इति **माध्यमिकः** । तदेवं चतुर्मतमेतच्छास्त्रम् ।

---

तर्हि स्वर्गनरकावपि स्यातामित्याशंक्येष्टापत्तिरित्याह अस्तीति तयोर्व्यवहितदेशकालसाध्यत्वात्तत्साधन धर्माधर्मावभ्युपगच्छति धर्भ इत्यनुभवं प्रमाणयति पश्येति । क्षणादिति । इदं प्रसाध्यंगकदीपेति किन्त्विति शेषः । स्कन्धा इति । क्षणिकशरीरादिसंतान इत्यर्थः । तदुक्तमाचार्यैः—

पंचस्कन्धा भवन्त्यत्र द्वादशायतनानि च ।
सर्वेषामपि बौद्धानां तथाष्टादश धातवः ॥
ज्ञानसंस्कारसंज्ञानां वेदनारूपयोरपि ।
समूहस्कन्धशब्दार्थः तत्तत्संतति वाचकः ॥
ज्ञानं संततिरेवात्र विज्ञानस्कन्ध उच्यते ।
संस्कारस्कन्ध इत्युक्तो वासनानां च संततिः ।
सुखदुःखात्मिका बुद्धिस्तथापेक्षात्मिका सदा ।
वेदनास्कन्ध इत्युक्तः संज्ञास्कन्धस्तु नाम यत् ॥
रूपस्कन्धो भवत्यत्र मतं भूतस्य संहतिः ॥इति॥

नावर्तते न तदेव पुनरुत्पद्यते कथं तर्हि तदुत्तरं तद्व्यवहार इत्यत आह किन्त्विति । जायत इति ।

**चित्तशर्मा**—वयस्य, नियताध्ययनविहितानुष्ठानसंकटमन्तरेण सुगमनिःश्रेयसमिदं सुगतमतमनादरणीयम् ।

---

अन्यदन्यत्तज्जातीयमेवेति भावः । नष्टं नावर्तते इति वाक्यात् । तथा च पुनः पुनरिति पदद्वयमपि सर्वदेत्यर्थकतया व्याख्येयम् । एवं सति बन्धमोक्षौ व्यवस्थापयति तथाचेति । कर्मभिरहिंसादिरत्तेजिता विसष्ट-मारब्धा वासना धर्माधर्मरूपा, तया कृतो जगज्जन्मप्रवाहो जन्मप्रवाहो जन्मपरम्परा क्षणिकत्वेन स्थितप्रसक्त्यभावाज्जन्मेति च जायमानो-घटादिर्गृह्यते । स च नातिरिक्तोऽवयवी किन्तु परमाणुपुंज एव । जाल-सूर्यमरीचिस्थरजस्तमसी संवलित दूरस्थ केशदृष्टान्ताभ्यां अणुपुंजस्यापि प्रत्यक्षत्व संभवादिति भावः । अर्कतैजसीति जात्यभिप्रायमेकवचनम् । अत एवाह धारावाहिनीति । एवं बन्धमुपपाद्य मोक्षमुपपादयति गलतीति । चतुर्विधज्ञाननिवर्तकेन प्रमाणद्वयजन्यज्ञानेनेत्यर्थः । तेन च मूलाज्ञानस्य विनिवृत्तौ दृश्यप्रपंचाभावात् निर्विषयनिर्मलज्ञानस्वरूप आत्मैव मोक्ष इति भावः । यदाहुः—

चतुर्विधं यदज्ञानं प्रमाणाभ्यां निवर्तते ।
नष्टे चतुर्विधाज्ञाने मूलाज्ञानं निवर्तते ।।
शुद्धबुद्ध्यवशेषो हि मोक्षो बुद्धमनीप्सितः । इति

इत्थं सामान्येन बुद्धितत्वे स्थिता बौद्धा इत्युक्तबुद्धमतमुपन्यस्य संप्रति

चतुर्णां मतभेदेन बौद्धशास्त्रं चतुर्विधम् ।
अधिकारानुरूपेण तत्र तत्र प्रवर्तते ।।

इत्युक्त वैभाषिक सौत्रान्तिकयोगाचारमाध्यमिकानां मतानि विभजते । अत्रेति । तत्र माध्यमिकातिरिक्तं तत्र ये बुद्धिरस्ति । वैभाषिकसौत्रान्तिकयो-र्बाह्यार्थोऽस्ति ।

त्रयाणामत्र बौद्धानां बुद्धिरस्त्यविवादतः । बाह्यार्थोऽस्ति द्वयोरेव' इति वचनादित्यभिप्रेत्याह बाह्यार्थ इति । वनसेनादिवत् पुंजीभूताः परमाणव

वस्तुविचारः—तदपि श्रूयताम् । अनाद्यविद्यावासनाप्रपंचिता विषयसंततिः स्वरूपज्ञाने प्रतीयते । तददिमेव संसरणं नाम । तदनु- तत्त्वज्ञानतो वासनाविगलने सति स्वरूपज्ञानस्य निर्विषयोपरागत्व- मेवापवर्ग इत्यद्वैतमेवाभिमतमस्य सुगतसिद्धान्तस्यापि । अत एवामुष्य जगन्मिथ्यात्वाभिप्रायः शून्यवादः । क्षणिकतावादस्तु विशेषणीभूत तत्तत्क्षणानित्यत्वाभिप्रायकः । स चायमपवर्गः । निष्कामकर्मानुष्ठान- जन्यचित्तशुद्धिद्वारकउपनिषदधिगम्यः' इत्येतदाशयमविज्ञाय शाप- वशेन निगमपथपरित्यागस्तु नरकाय भवति ।

---

एव घटपटादिर्नातिरिक्तोऽवयवी कश्चिदस्ति प्रमाणाभावादिति भावः। इदं च प्रत्यक्षघटपटाद्यभिप्रायेण परोक्षस्य अनुमानमेवेति बोध्यम् । तदुक्तं वैभाषिके मत इत्युपक्रम्य "प्रत्यक्षत्वं" तु बाह्यस्य क्वचिदेवानुमेयता पूर्वापरादिभावेन पुंजीभूताः सहस्रशः परमाणव एवात्र बाह्यार्था वनवत् स्थिताः' इति पृथिव्यादि धातुचतुष्टयमुपक्रम्य एषां चतुर्णां धातूनां वर्णगन्धरसौजसाम् पिण्डाज्जाताः पृथिव्याद्याः परमाणुचया अमी इति च। बोधाकारेति । बुद्धिर्यद्यदाकारेण परिणमते तत्तदाकारघटादि तत्रानुमीयत इत्यर्थः ।

ज्ञानं ज्ञेयं विना नास्ति बाह्यार्थोऽप्यस्ति तेन न ।
नीलपीतादिभिश्चित्रैर्बुध्याकारैरिहान्तरैः ॥
सौत्रान्तिकमते नित्यं वाह्यार्थस्त्वनुमीयते ।
क्षीणानि चक्षुरादीनि रूपादिष्वेव पंचसु ॥
न षष्ठमिन्द्रियं तस्य ग्राहकं विद्यते बहिः । इति

बुद्धिमात्रमिति । बुद्धेरेवेत्यर्थः । न कश्चिदिति । मानाभावादिति भावः । न च ज्ञानं निरालम्बनं स्यादिति वाच्यम् । इष्टापत्तेस्तदुक्तम् ।

अविभागो हि बुध्यात्मा विपर्यासितदर्शनैः ।
ग्राह्यग्राहकसंवित्ति भेदवानिव लक्ष्यते ॥

(लोकायतिकसिद्धान्तो विवसनसिद्धान्तं पश्यति)

**विवसनसिद्धान्तः** — (*सहस्ततालंविहसन्*) अहो स्वव्याघातोपहतोऽयमस्योपन्यासः ।

प्रत्यक्षाधिकमप्रमाणमुररीकृत्यानुमानं ततो
गम्यं धर्ममुरीकरोति च ततः स्वर्गादि भोगादि च ।
यत्सत्तत्क्षणिकं ब्रवीति च पुनर्व्याहन्यते स्वं वचः
स्वेनैवास्य न किं जिगीषति कथं बुद्धो मतेनामुना ।।२१।।

---

नानुमेयफलाद्युक्तं ज्ञानदृष्ट्यनुसारतः ।
अधिकारिषु जातेषु तत्वं मामुपदेक्ष्यति ।।
बुद्धिस्वरूपमेकं हि वस्त्वस्ति परमार्थतः ।इति।

**शून्यमेवेति** । किन्त्विति शेषः । "नास्ति बुद्धिरपीत्याह वादी माध्यमिकः किल" इति च वचनात् । तत्वस्य शून्यत्वं च सदसत्वादिकोटिचतुष्कशून्यत्वम् । अत एव ।

'न सन्नासन्नसदसन्न चोभाभ्यां विलक्षणम् ।
चतुष्कोटि विनिर्मुक्तं तत्वं माध्यमिका विदुः ।।

इत्युक्त्वा यदसत्कारणैस्तत्र जायते शशश्रृंगवत् ।
सतश्चोत्पत्तिरिष्टं चेज्जनितं जनयेद्धटम् ।

एकस्य सदसद्भावो नितरामुपपद्यते ।
एकस्य सदसद्भ्योऽपि वैलक्षण्यं न युक्तिमत् ।।

चतुष्कोटिविनिर्मुक्तं शून्यं तत्वमिति स्थितम् ।

इति उपपादितम् ।

**नियतेति** । नियतं "नित्यं ब्राह्मणेन निष्कारणः साङ्गो वेदोऽध्येय" इति विहितनित्याध्ययनाहरहः संध्यामुपासीतेत्यादि विधिविहितनित्यकर्मानुष्ठानेत्यर्थः ।

**सुगतः—**(*साभ्यसूयम्*) अये नग्नक्षपणकसिद्धान्त, दूरत एव तिष्ठ। स्नातः पूतः संनिधेहि स्वमतमभिधातुम्।

**विवसनः—**

देहोऽयं मलभाण्डमस्य शुचिता का नाम तीर्थोदिकै-
र्देही निर्मल एव तिष्ठति घटस्यान्तः प्रदीपो यथा।
देहो नान्तरितस्तु संसरति स स्वीयैर्हृतः कर्मभिः
प्रारब्धानुगुणं प्रपद्य च वपुर्भुङ्क्ते सुखे वाऽसुखम् ॥२२॥

---

यद्वा गुरुकुलवासभिक्षाचरणादिनियमविशिष्टमध्ययनमित्यर्थः। अनादीति। 'अविघातच्चितोर्योगः पऽस्माकमनादय' इति अविद्यायाः अनादित्वादिति भावः। स्वरूपेति। प्रत्यगभिन्न ब्रह्मात्वस्वरूपे प्रतीयते विषयीभवति। संसरणं संसारः। तदन्विति। आविद्यकप्रपंचसिद्धयनन्त-रमित्थं। तत्वज्ञानत इति। प्रत्यगभिन्नब्रह्मज्ञानेनेत्यर्थः।

वासनेति। सवासनाविद्योच्छेदेत्यर्थः। तथा च मुक्तिदशायां स्वरूप-ज्ञानस्य विषयसंबन्धरहितत्वमस्माकमविरुद्धमिति भावः। अत एवेति। उक्त प्रकारेण प्रधानपुरुषार्थाविरोधादेव व्यवहारसमर्थनमप्यविरुद्धं शून्यादस्य सिद्धान्तो द्वैतशास्त्राणां सर्वापह्नव एव हि, इति मिथ्यावादपर्यायित्वादिति भावः। निष्कामेति। यज्ञेन दानेनेत्यादिवाक्येन परमेश्वरप्रीत्यर्थकमनुष्ठानजन्येत्यर्थः। तस्य च वाक्यस्य तमेतं प्रकृतं परमेश्वरं ब्राह्मणाः वेदानुवचनेन वेदाध्ययनेन यज्ञेन अग्निहोत्रदर्शपूर्णमासादिनित्यनैमित्तककाम्यरूपेण नित्य-नैमित्तिकमात्रेण वा अनाशकेन तपसा हितमितमेध्याशनादिना विविदिषन्ति वेत्तुमिच्छन्तीत्यर्थः। तथा च एतद्वाक्यविहितकर्मणां कामनारहितानां प्रत्यवायमात्रपरिहारार्थानां यथा चित्तशुद्धयर्थत्वं तथा प्रपञ्चितमन्यत्र।

शापेति। शापः प्रागेवोक्तः। विवसनेति। प्राणिनां देहसमपरिमाणा देहान्तर्वर्तिनः जीवाः घटस्यान्तः प्रदीप इव स्वदेहमान्याद्यात्मनः मोहाद्देहा-

भिमानिनः, क्रिमिकीटादिहस्त्यन्तदेहपंजरवर्तिनः" इति क्षपणकपक्षसंक्षेपवचनात् । एवं च आत्मनो देहावृतस्य निरावरणतालक्षणमोक्षसिद्धयर्थ देहाख्यावरणस्याप्यपक्षयस्यापेक्षितत्वात् । उक्तं च—"कर्मार्जितकलेवरैः" अवृत्तिर्बन्धनमुक्तिर्निरावरणातात्मनाम् ॥इति॥ एवंविधो विवसनसिद्धान्त इत्यर्थः । **स्वव्याघातेति** । स्वव्यवहारविरोधपराहत इत्यर्थः । तदेवाह—**प्रत्यक्षादिति** । धर्ममित्युपलक्षणम् । अधर्ममपि द्रष्टव्यम् । स्वर्गादीत्यादिना नरकः, भोगादित्यादिना नामरूपादि । **व्याहन्यत इति** । विप्रकृष्टदेशकालभोग्यफलाभ्युपगमः । प्रपंचस्य क्षणिकत्वाभ्युपगमश्च परस्परविरुद्धौ न किमित्यर्थः स्वं स्वयं स्वेनैव स्वीयेनैव वचसेति विभक्तिविपरिणामेन संबध्यते ।

**अमुनेति** । उक्तप्रकारेण विरोधशिथिलेन स्वमतेन कथमन्यं जिगीषति । जेतुमिच्छतीत्यर्थः । **स्नातेति** । 'पूर्वं स्नातः ततः पूत" इत्यर्थः । पूर्वकालेत्यादिना समासः ।

ननु स्नानं कस्य शुद्धिसाधनं देहस्यात्मनो वा इति विकल्प्य नाद्य इत्याह **देह इति** । मलभाण्डं मलपूरितम् । भाण्डं पात्रविशेषः । **का नामेति** । लेपगन्धापकर्षणे शौचममेध्यस्येत्यादि धर्मशास्त्रानुसारेण मलभाण्डस्य निर्लेपप्रक्षालनाद्धि शुद्धिः संभाव्यते । सा च नित्यमलिनस्य देहस्य न संभवतीत्यर्थः । तदुक्तम्—अत्यन्तमलिनो देहो देहीचात्यन्तनिर्मलः ।

अनयोरन्तरं ज्ञात्वा कस्यशौचो विधीयते ? इति। द्वितीयं प्रत्याह—**देहीति । निर्मल एवेति । स्वभावत** इति शेषः ।

ननु निर्मलत्वं नित्यमलिनदेहनिविष्टस्य जीवस्य कथमद्य घटे **दर्भमुष्टिन्यायादित्यत** आह। **घटस्येति** । सुरभाण्डस्येत्यर्थः । यथा सुरा भाण्डगतस्य दीपस्य तदीयाशुचित्वदुर्गन्धादिसंबन्धो यथा नास्ति तथेत्यर्थः । आधेयातिशयस्य वस्तुनः तथात्वेऽपि अनाधेयातिशयस्वभावस्यात्मनः मलिनदेहसंबन्धेऽपि निर्मलत्वमेव प्रत्युत रथ्योदकमिव गंगाप्रवाहापातः पवित्रयतीति न्यायेन निर्मलात्मत्वसंसर्गात् देह एव कुतो न पूतो भवतीति भावः । कथमैतादृशस्य संसारः इत्यत आह—**देहेनेति** । कर्मभिः पुण्यापुण्यरूपैर्हृतः वशीकृत

वृद्धः—अये किमर्थं आवरणं न क्रियते ।

विवसनः—जीवस्यावरणं देहो देहस्यावरणं कुतः ।
यदि तस्यापि कार्यं स्यात्तस्यापीत्यनवस्थितिः ॥२३॥

वृद्धः—अये कथमेतादृशस्य जीवस्य मोक्षः ।

विवसनः—शृणु तावत् ।

मयूरपिच्छधारणं मलं च केशलुञ्चनं
महर्षिपूजनानि नग्नता मनस्यनीर्ष्यता ।
अहिंसनं क्षमा दया सदेति मोक्षसाधनैः
शरीरकारि कर्म तत्सवासनं विनश्यति ॥२४॥

तथा सति—

उच्चैर्भूरिमहो निरन्तरमहालोकान्तराणामुप-
र्यास्ते मोक्षशिला नितान्तमहिता ज्योतिर्मयी शाश्वती ।
तामभ्येति, झटित्यसौ तडिदिवोद्गच्छन्वपुर्ध्वंसना-
त्तत्रायं परमात्मनाथ घटते मोक्षोऽयमर्हन्मतः ॥२५॥

---

इति यावत् । तथाचोक्तम् "पुद्गलापरसंज्ञैस्तु धर्माधर्मानुगामिभिः । परमाणुभिरारब्धा देहाः सर्वैः सहेन्द्रियैः" इति । मोहाद्देहाभिमानिन इति च ॥ प्रारब्धेति । एतच्च वपुरित्यस्य सुखं वासुखमित्यनसेयांश्च विशेषणम् । तेन यत्प्रारब्धफलं कर्म तदनुगुणम् शरीरं लब्ध्वा सुखदुःखे अनुभवतीत्यर्थः । तस्यापि देहस्यापि कार्यमावरणमित्यनुषज्यते । तस्यापीति । देहावरणवस्त्रादेरप्यावरणं कार्यं उपेक्षायां मानाभावात् । न हि देह एवावरणीयः इति राजाज्ञेत्यनवस्थापत्तिरित्यर्थः एतादृशशस्येति । स्वतो निर्मलस्यापि कर्मभिरवशं निबद्धस्य इत्यर्थः । मयूरेति । सर्वत्र विवक्षितलिङ्गवचनं कर्तव्यम् ।

**बुद्धः**—अये कुतस्तवायमध्यवसायः ।

**विवसनः**—शब्देनानुमानेन च ।

**बुद्धः**—किमयमेव सिद्धपरमेष्टिपदाभिधेयः परमात्मा तव मते जगत्कर्ता ।

---

पदाध्याहारेण योजना । तथा च मयूरपिञ्छस्य मयूरबर्हस्य धारणं मलं च स्नानादिपरित्यागात् । अत एव स्नानपूतः सन्निधेहीतिप्रागुक्तं बुद्धवचनम् अश्रुतमभिनीय क्षपणकेन तिरस्कृतं केशलुञ्छनं केशोन्मूलनम् कर्तव्यं महर्षिपूजनानि महर्षेः क्षपणकाचार्यस्य पूजनानि कर्तव्यानि । क्षपणकोभि-मन्त्राणां दृष्टा मन्त्रशास्त्रे प्रसिद्धिः । नग्नता कर्तव्या । अनीर्ष्यता अहिंसनं हिंसाभावः । क्षमा सहनम् ।

"प्राणिजातमहिंसन्तो मनोवाक्कायकर्मभिः ।
दिगम्बराश्चरन्त्येव योगिनो ब्रह्मचारिणः ।।
मयूरपिञ्छहस्तास्ते कृतवीरासनादिकाः ।
पाणिपात्रेण भुंजाना लूनकेशाश्च मौनिनः ।।

मुनयो निर्मलाः शुद्धाः प्रणताघौघभेदिनः । इति । प्रमाणमत्र द्रष्ट-व्यम् । अत्र हि लूनकेशा लुञ्छितकेशाः इत्यर्थः । लुञ्छितमूर्धजा इति जिन-दत्तसूरिवचनात् क्षमा दयेत्येतत् मुनय इत्यनेन सङ्गृहीतम् । मोक्षसाधनैरिति । "गुरूपदिष्टमार्गेण ज्ञानकर्मसमुच्चयात् । मोक्षे बन्धविमुक्तस्य जायते भुवि कस्यचित्" ।। इति वचनेन विवशनमते मोक्षे ज्ञानकर्मसमुच्चयस्वीकारादिति भावः । तथासति सवासना मिथ्याज्ञानादिबन्धहेतुविलये सति अभिनव-कर्माभावात् निर्जरा हेतुसन्निधानेनार्जितस्य कर्मणो निरसनादिति भावः । एवं चात्यन्तिककर्मत्यागलक्षणो मोक्षः" सिद्ध इत्याह उच्चैरिति । तदुक्तं बन्ध-हेत्वभावनिर्जराभ्यां कृत्स्नकर्मविमोक्षणे मोक्ष इति तपः प्रभृतीनामार्जित-कर्मणां जरणनिर्जराख्यं तत्वमिति तन्मते प्रसिद्धम् । निशेषकर्मत्यागे सति

**विवसनः—नहि नहि कर्मभिरेव जगन्ति जायन्ते विनश्यन्ति च।**

---

पूर्वकृतप्रणिधानादिसंस्कारवशाद्दण्डाद्याघूर्णितस्य कुलालचक्रस्य तदाहित योगाख्यसंस्कारवशाद्यथा चिरभ्रमणं तथा मुक्तिदशायामुद्गमनमालोकाकाशे मुक्तस्य भवति ऊर्ध्वगमनं च मुक्तस्य कर्मराहित्येन बन्धहेत्वभावादसंगत्वादूर्ध्व-गतिशीलत्वाच्चातिबहुलपङ्कोपगूढा गाढजलनिमग्न लवणपरिक्षीण कबन्धाला-बूफलवदत्यन्तमातात्वैरण्डबीजवदग्निशिखा बच्चोपपन्नम्। तथा च महो निरन्तराणि लोकन्तराणि सूर्यचन्द्रादिलोकान्तराणीति ध्येयम्।

अत एवोक्तम्—

गत्वा गत्वा निवर्तन्ते चन्द्रसूर्यादयो ग्रहाः।
अद्यापि न निवर्तन्ते त्वालोकाकाशमागताः॥

इति। मोक्षः शिलामोक्षदशायामुक्तनामवस्थानयोग्या धारा ज्योतिर्मयी आलोकाकाशरूपा शाश्वती नित्यवपुर्ध्वंसनादिति उक्ता। अलाबून्यायादिति भावः।

तत्रेति। आलोकाकाश इत्यर्थः। परमात्मना अर्हन्नामधेयेन सर्वज्ञेन सिद्धपरमेष्ठीपर्यायेण। तदुक्तमाप्त निश्चयालङ्कारे हेमचन्द्रेण।

सर्वज्ञो जितरागादि दोषस्त्रैलोक्यपूजितः।
यथास्थितार्थवादी च स्यादहन् परमेश्वरः॥इति॥

अर्हन्मत इति। अत्र मतद्वयमालोकाकाशे निरन्तरगमनं मुक्तिरित्येकम्। तद्गतस्य कचित् उक्तरूपशिलावस्थानमित्यन्यदिति तत्र द्वितीयमतेन अयं मोक्ष इत्यर्थः।

नहि नहीति।

कर्तास्ति कश्चिज्जगतः स एकः
स सर्वगः सर्ववशः स नित्यः।
इमाः कथा भेदविडम्बना स्युः
तेषां न येषामनुशासकस्त्वम्।
कर्ता न तावदिह कोऽपि यथेच्छयासौ
दृष्टोऽन्यथा कटकृतावपि तत्प्रसंगात्॥

**वस्तुविचारः**—अस्यापि स्वप्रकाशसंविद्रूपदेहातिरिक्तात्माभ्युपगमेन सिद्धपरमेष्ठिनामक परमात्माभ्युपगमेन च जीवपराभेदरूपमद्वैतमेवा भिमतमिति रमणीयमेव मतम् । परं त्वेतदभिमताहिंसाक्षमा । दयादिपारम्यानुसंधानतो यज्ञादिकममुष्यानभिमतमिति भ्रान्त्वा शापवशेन निगमपथपरिभ्रंषस्तु पतनाय जायते । अतः "स्यादस्ति" इत्यादि सप्तभंगीप्रतिपादनं जगदनिर्वचनीयत्वतात्पर्यकम् । देहशौचाद्यभावप्रतिपादनं चात्मनः स्वतो निर्मलत्वाभिप्रायकम् ।

---

इत्यादि दिगम्बरमते परमेश्वरस्य कर्तृत्वप्रतिषेधादिति भावः ।

**कर्मभिरिति** । किन्त्विति शेषः । **जीवपरेति** । प्रकारान्तरासंभवादिति भावः । **सप्तभंगीति** ।

स्यादस्तिस्यान्नास्तिस्यादस्ति च नास्ति च ।

स्यादवक्तव्यः स्यादस्ति चावक्तव्यः स्यान्नास्ति चावक्तव्यः स्यादस्ति च नास्तिचावक्तव्यं इति

सप्तभंगी जैनैरुक्ता । तत्रस्याच्छब्दः वाक्येष्वनेकान्तद्योतिगम्यं प्रति विशेषणम् ।

"स्यान्निर्णीतोर्थयोगित्वात्तिङन्तप्रतिरूपक इति वचनादव्यय इत्यवगन्तव्यम् । जगतः उक्तसप्तभंग्याश्रयत्वं च घटोऽस्तीति न वक्तव्यः सन्नेव हि घटो यथा ।

नास्तीत्यपि न वक्तव्यं विरोध सदसत्वयोः ।" इति वचनानुसारेण वोद्धव्यम् । **जगदिति** । सत्वासत्वाभ्यामनिर्वचनीयत्वस्यैव वेदान्तेषु विवक्षितत्वादिति भावः । **निर्मलत्वेति** । एष आत्मापहतपाप्मेति निरवद्यं निरंजनमित्युपनिषत्सु प्रसिद्धत्वादिति भावः । **अवैदिकानीति** । वेदप्रामाण्याग्युपगन्तृभिः कल्पितानीत्यर्थः । तन्मतसिद्धचैत्यवन्दनादिधर्मतत्फलस्वर्गादेः पश्याम्यहं भिक्षवो दिव्येन चक्षुषेत्यादिवचनैस्तन्मते प्रत्यक्षमूलत्वांगीकारात् ।

**अविद्या**—(*जनान्तिकम्*) सखि विषयवासने, देवोऽयम् "अवैदिकानि" इति खलु मतान्यमूनि न संमन्यते । वैदिकेषु सोमसिद्धान्तादिषु वा किंचिदभिनिवेश्य यदि सगुणविद्याभिरभिरमेत, तावतापि ननु भवेदस्माकमाश्वासः । तेजस्तिमिरवदद्वैतविद्या किलात्यन्तिकविरोधिनी दृश्यते ।

**राजा**—(*पुरो विलोक्य*) क एष

भस्मलेपशरदभ्रविभ्रमं विभ्रदुग्रवपुरद्भुतभ्रमः ।
पुण्डरीकधवलाननभ्रमच्चण्डकोकनदचारुलोचनः ॥२६॥

**चित्तशर्मा**—अयमेव सोमसिद्धान्तो नाम ।

**सोमसिद्धान्तः**—(*सस्मितम्*) हन्त प्रमाणपथावर्तिन एवानेन केनापि केऽपि पदार्थाः प्रतीयन्ते । अपि च

तदागमास्तद्गिर एव वर्ततामतोऽपवर्गोऽस्य यथाकथंचन ।
यदैहिकं सौख्यमिदं किमीर्यतामतो भृशं गर्हितमार्हतं मतम् ॥२७॥

---

मतानीति निर्देशः । न सन्मन्यते नांगीकरोति वैदिकेष्विति वेदप्रामाण्यवादिपरिगृहीतेष्वित्यर्थः ।

सगुणेति । तत्तन्त्रप्रतिपादितो सनाभिरित्यर्थः आत्यन्तिकेनेति । स्वरूपनाशिनोत्यर्थः । भस्मलेपेन सर्वांगनिरन्तरसमुद्धूलनेन शारदवारिदस्य विभ्रमो विलासस्तद्वदुग्रेति प्रमाणाकारादिभिः भयहेतुत्वेन उग्रं वपुः ।

धवलेति । भस्मलेपादिति भावः । चण्ड सद्यो विकस्वरतया अतिरिक्तेत्यर्थः । अनेन विवसनेन प्रतायन्ते विस्तार्यन्ते ।

ननु प्रनाणपथातिवर्तिनः इत्युक्तम् । उक्तवचनानामेव सत्वादित्यत आह अपि चेति । तद्गिर एवेति । न हि स्वोक्तार्थे स्ववचनमेव प्रमाणमिति

(*किंचिदन्तर्विमृशन्*) अहो बत मामकमतस्य रमणीयता।

ज्योत्स्ना धौतदिशा निशा परिकरैर्विश्वोत्तरं चत्वरं
मद्यं हृद्यरसं मदालसवधूवक्त्राम्बुजामोदितम्।
आश्वाद्यं तरसं घृतादिसरसं कान्ताकरान्तादिति
स्वर्गं प्राप्य समग्रमत्र परतः प्राप्योऽपवर्गोऽपि यत् ॥२८॥

---

प्रसंगादिति भावः। यदैहिकमिति मलधारणादिक्लेशयुक्तमित्यर्थः। स्वमते तु नायं दोष इत्याह ज्योत्स्नेति। ज्योत्स्नया धौता धवलिता दिशाः दिशः।

"आप चैव हलन्तानां यथा वाचा निशा दिशा" इति स्मरणात्।

ईदृशीति। निशापरिकरैः स्रक्चन्दनादिभिर्भोगसाधनैः चत्वरमंगणमास्वाद्यमिति मद्यमित्यनेन संबध्यते। तरसं मांसं घृतादीत्यादिना मांससंस्कारकलशुनादिपरिग्रहः कान्ताकरान्तात् आपतितमिति शेषः। इति प्रकारे। एवं प्रकारं स्वर्गमिव स्वर्गमित्यर्थः। अत्र भूलोके परतः सोमलोके यद्यस्मादेवमतिसुलभौ स्वर्गापवर्गावतो मन्मतमतिरमणीयमिति भावः। सभयेति। उद्वेगः कम्पः। रणरणकमिति यावत्। कस्त्वेति। दिगम्बरेण धर्माभ्युपगमेऽपि प्रकार भेदापरिचयात् प्रश्नः सर्वेषामपि मते मुक्तेः पुरुषार्थसार्धमूर्धन्यतया प्राधान्यात् प्रधानमल्लनिबर्हणन्यायेन प्रश्नव्युत्क्रमेणोत्तरयन्नपवर्गं प्रथममाह प्रत्यग्रेति। सद्यः कृत्तमनुष्यकन्धरोदरनिरर्गलविनिर्गलदतिरिक्तरक्तधारा समुद्रिक्तनिरवद्यमद्यनैवेद्यनितान्तसुहित समग्रप्रसादसंपन्न महाभैरव निरवग्रहानुग्रह समासादित सार्वज्ञ्यादिकमांगल्यगुणग्रामाभिरामनिःसीमाभिरूप्य तत्सारूप्यरूप एव मोक्षलक्षणः परमपुरुषार्थ इति श्लोकार्थः। तत्र गुणसंप्रत्येति। इत्थंभूतलक्षणे इति तृतीया। तथा च तदीयगुणसंपत्युपलक्षितं सारूप्यं तादृशगुणसंपत्युपलक्षितो महा भैरव इति वा योज्यम्। बलभिदिति संसारदशायामपीति भावः। मध्यमप्रश्नोत्तरमाह स्वर्गस्त्विति। अहृदयवाचामहृदया एव प्रतिवाचो भवन्तीति न्यायेन विवसननिरसनाय कथं-

**विचसनः**—(*सभयोद्वेगम्*) (*स्वगतम्*) हन्त कथमयमन्तक इव चिन्ताविषयोऽपि संतापयति (*प्रकाशम्*) अरे सोमसिद्धान्त कस्तव मते धर्मः, कथमिव स्वर्गः, क इव चापवर्गः ।

**सोमसिद्धान्तः**—अरे श्रूयताम् ।

प्रत्यग्रप्रहृतत्वरज्झलझलद्रक्तप्रवाहक्षणो
नृत्यन्मर्त्यनवोपहारनिवहैर्मद्यैश्च संप्रीणितः ।
सार्वज्ञ्यादि समग्रदिव्यगुणसंपत्या महाभैरवः
सारूप्यं निजमातनोति बलभिद्योग्यं च भाग्यं दिशन् ।।२६।।

सदेहकैवल्यमिदमेव नः परमपुरुषार्थः । इति स्वर्गस्त्वयमेव यदत्र समभिलषितसर्वार्थसिद्धिभिरनियन्त्रिताः कामोपभोगा इति

---

चिज्जीवराजसंवननाय चैहिकमेव सुखं स्वर्ग इत्युक्तिः । अतः सोमसिद्धान्ते स्वर्गादिलोकाभ्युपगमे बलभिद्योग्यमिति प्राचीनवाक्येन प्रतीयमानेऽपि न विरोधः । एवंविधस्वर्गसाधनं धर्म इत्युक्तप्रायत्वान्न पृथक् तदुत्तरमुक्तमिति ध्येयम् । अत्र संसारे समभिलषिता अर्था स्रक्चन्दनवनितादयः तत्सिद्धय-स्तत्प्राप्त्युपायाः वयश्याकर्षणादयः करणे क्तिन् । तैरप्रतिबन्धाः कामोपभोगा एवेत्यर्थः । सर्वे इति माध्वरामानुजादय इत्यर्थः । सालोक्येति । इदमुपलक्षणम् । सगुणसायुज्यसाष्टिरूपेष्वित्यपि द्रष्टव्यम् । पदेष्विति । पद्यन्त इति पदानि । मुक्तयः । मन्वत इति । भ्रमादिति शेषः । तत्र स्थालीपुलाकन्यायेनानन्तकल्याण गुणनारायणनामपरब्रह्मपरतया सर्वमेव वेदान्तशास्त्रं प्रतिष्ठापयतोः पांचरात्रतन्त्रानुसारिणो जीवेश्वरादिभेदवादेन विप्रकृष्टयो रामानुजमाध्वयोर्मते क्रमेण दर्शयति । तथाहीति । जीवस्य तावदणुत्वं ज्ञात एवेत्यधिकरणे जीवस्य ज्ञानस्वरूपत्वे सर्वदा सर्वोपलब्धि-प्रसंग इत्याशंक्य 'तेन प्रद्योतेनैष आत्मा निष्क्रामति एवैके चास्माल्लोकात्

**वस्तुविचारः**—अये चित्तशर्मन्, एवमेव भेदवादिनः सर्वेऽप्यस्मदीयसगुणोपासनफलीभूतेषु तत्तदुपासनतरतमानुगुण्येन सालक्यसामीप्यसारूप्यरूपेषु पदेषु रममाणास्तदेव परममृतं मन्यन्ते। तथाहि जीवाणुत्वनित्यत्ववादिनो रामानुजीयाः चिराद्दुष्कर्मकर्म-कवलितज्ञानानन्दस्वभावतया संसरन्तो जीवाः दुःखानुभवनिर्विण्णा भक्त्या प्रपत्त्या वा हरिमाराध्य तत्प्रसादेन विगलितकर्मबन्धा भगवत्सारूप्यमधिगम्य स्वकीयधर्मज्ञानविकासेन भगवदानन्दमनुभवन्ति

---

प्रयान्ति चन्द्रमसमेव ते सर्वे गच्छन्ति तस्माल्लोकात् पुनरेत्यस्मै लोकाय कर्मण' इति जीवस्योत्क्रान्तिगत्या गतिश्रवणादणुरेव जीव इति उत्क्रान्ति-गत्यादीनामिति सूत्रेण निरूपितम्।

नित्यत्वं च नात्मा श्रुतेर्नित्यत्वाच्च ताभ्य इति तदधस्तनाधिकरणे वर्णितम्। तत्र हि वियदादिवज्जीवोऽप्युत्पद्यते "यतो वा इमानि भूतानि जायन्ते"। प्रजापतिः प्रजाः असृजत इत्यादि श्रवणादिति प्राप्ते "न जायते म्रियते वा विपश्चित्" अजो नित्यः शाश्वतोऽयं पुराणः" "नित्यो नित्यानां चेतनश्चेतननाम्" इत्यादिश्रुतिभिः जीवस्य उत्पत्त्यभावस्य नित्यत्वस्य च श्रवणान्नित्यो जीवमित्युक्तम्। रामानुजीयाः लक्ष्मणाचार्यच्छात्राः। **चिरादिति।** कर्मवासनयैव अविद्यापदाभिधेयया कवलितौ तिरोहितौ ज्ञानानन्दयोः स्वभावौ येषां ते तथोक्ता इति योजना। अत्र कर्मवासनैवाविद्येति रामानुजदर्शनसङ्ग्रहे अविद्यारूपकर्मवेष्ठितानामिति व्यवहारादवगन्तव्यम्। तथा ज्ञानं जीवस्य गुणः न स्वरूपम्। तथात्वे सर्वदा सर्वोपलब्धिप्रसंगात्। ज्ञानगुणश्च नित्यः प्रदीपप्रभावात् संकोचविकासशाली च 'विज्ञानं यज्ञं तनुत' इत्यादिषु जीवस्य ज्ञानरूपत्वव्यवहारस्तु तस्य स्वप्रकाशत्वात्तद्गुणसारत्वाद्वा भाक्तम्। इत्युक्तं ज्ञोऽत एवेत्यधिकरणे। आनन्दश्च तस्य तदा तदा तत्तद्विषयोपरागेण जायमानो न नित्यः"। इत्युक्तमानन्दमयाधिकरणे। तत्र हि आनन्दमयो जीव इति पूर्वपक्षे "ब्रह्मपुच्छं प्रतिष्ठेति" वाक्ये ब्रह्मपदमिति क्षुद्रसांसरिकानन्देतरमुक्तिदशाविर्भविष्यदखण्डानन्दपरमित्युक्त्वा सिद्धान्ते युवा

इत्यभिदधते । तथैव प्रत्यक्षादित्रयप्रामाण्यजगत्सत्यत्वावादिनो माध्वा अपि अविद्यासंकटविघटितज्ञानानन्दस्वभावात्तत्वतो भगवद्भिन्ना जीवाः संसरणदुःखानुभवनिर्विण्णाः सकलाम्नायसमधिगम्यं भगवन्तं भक्त्या समाराध्य तत्प्रसादतः श्रवणमननादिविगलदविद्यावरणतया विशुद्धस्वभावा भगवच्छरीरं भूतादिवदाविश्य नीरक्षीरवदवस्थिताः स्वस्वाधिकारतरतमानुगुण्येन तदीयैरेवावयवै स्वस्वजात्यनुगुणान्भोगान्भुञ्जते स एव मोक्षः इत्याचक्षते ।

---

स्यात् साधुयुवध्यायक इत्याद्युक्तलक्षणमानुषानन्दप्रभृति प्रजाप्रत्यानन्दान्तसकलप्राणिवर्गानन्दजाता तदधिकतमतया कीर्तितस्यानन्दमयानन्दस्याखण्डस्य जीवे संभावनानर्हत्वेन तस्याखण्डानन्दे मानाभावादानन्दमयो न जीव इत्युक्तम् । अनित्यश्चानन्दः स्वसत्तायां प्रकाशाव्यभिचार्यवेति तस्याविद्यातिरोधानं संभवत्यविद्यावरणमिह ज्ञानस्य निःसंकोचविकासेन जीवसार्वज्ञ्ये परमेश्वराखण्डानन्दस्य जीवास्वाद्यत्वे च बोध्यम् ।

**भक्त्येति** । ज्ञानविशेषरूपयेत्यर्थः । ज्ञाने च विशेषः । विवेकविमोकक्रियाभ्यासकल्याणे अनवसाद अनुद्धर्षेभ्यः संभवान्निर्वचनाच्च संपन्नत्वं विवेकादिस्वरूपं तेषां च मूलप्रमाणपरिज्ञानरूपनिर्वचनं चाकरेषु प्रमाणं बोध्यम् । **प्रपत्त्या वेति** ।

सर्वधर्मान् परित्यज्य मामेकं शरणं व्रज ।
अहं त्वा सर्वपापेभ्यो मोक्षयिष्यामि मा शुचः ।।

इति भगवद्गीतोक्त्या सकलदेवतान्तरपरित्यागपूर्वकं केवलभगवदुपासनरूपया अभिगमनोपादाने स्वाध्याययोगभेदेन पंचविधया प्रपत्त्येति भावः । वा शब्दः समुच्चये । तदुक्तं यामुनेन—

उभयपरिकर्मितस्वान्तस्य एकान्तिकात्यन्तिकभक्तियोगलभ्य इति । ज्ञानकर्मयोगसंस्कृतान्तःकरणस्येति तदर्थः । ज्ञानकर्मसमुच्चयस्य च मुक्तिहेतुत्वं पुरुषार्थोऽतः शब्दादित्यधिकरणे व्यवस्थापितम् ।

(सोमसिद्धान्तः किमपि किमप्यालपन्पारवश्यमभिनयति)

**राजा**—(*पुरोऽवलोक्य*) अये किमेतावदस्य वैकृतं कापालिकस्य।

**चित्तशर्मा**—अयं किल महाभैरवपूजावसाने निपीय मद्यमतिमात्रं उन्मस्तकितमदावेशविवशो विलुठति ।

---

"अन्धं तमः प्रविशन्ति ये विद्यामुपासते" इत्यारभ्य विद्यां चाविद्यां च यस्तद्वेदोभयं सह। अविद्यया मृत्युं तीर्त्वा विद्ययामृतमश्नुत" इत्यादि श्रुतिरपि ज्ञानकर्मणोरेकैकनिन्दया समुचितसाधनत्वं दर्शयति तत्प्रसादेनेति। तदुक्तं पांचरात्ररहस्ये—

स एव करुणासिन्धुर्भगवान् भक्तवत्सलः।
उपासकानुरोधेन भजते मूर्तिपंचकम् ।।
तदर्चाविभवव्यूह सूक्ष्मान्तर्यामिसंज्ञितम् ।
यदा श्रयेत चिद्वर्गस्तदा श्रेयः प्रपद्यते ।।
पूर्वपूर्वोदितोपास्तेः शेषेण क्षीणकल्मषः ।
उत्तरोत्तरमूर्तीनां उपास्त्यधिकृतो भवेत् ।।
एवं ह्यहरहः श्रौतस्मार्तकर्मानुसारतः ।
उक्तोपासनया पुंसां·······वासुः प्रसीदति ।।
प्रसन्नात्मा हरिर्भक्त्या निदिध्यासनरूपया ।
अविद्याकर्मसंभूतरूपां सद्यो निवर्तयेत् ।
ततः स्वाभाविकाः पुंसा ते संसारतिरोहिताः ।
आविर्भवन्ति कल्याणाः सर्वज्ञत्वादयो गुणाः ।
एवं गुणाः समानाःस्युर्मुक्तानामीश्वरस्य च ।
सर्वंकर्तृत्वमेवैकं तेभ्यो देवो विशिष्यते ।।
मुक्तास्तु शेषिणो ब्रह्मण्यशेषे शेषरूपिणः ।
सर्वानश्नुवते कामान् सह तेन विपश्चिता ।।इति।।

**सोमसिद्धान्तः—**

*(सरभसमुत्थाय विकटताण्डवं नाटयन् परिक्रामन्)*

अहो प्रमादः प्रमादः । मदीयः किल परमपुरुषार्थः केनापि दुरात्मना चोरितः । किमितो विधातव्यम् । *(पार्श्वतोऽवलोक्य)*

प्रत्यंगभासिपरिपाण्डुघनोर्ध्वपुङ्गः पद्माक्षजालतुलसीमणिहारकण्ठः ।
आपास्तुतिं परिपठन्निह पाञ्चरात्रसिद्धान्त एष शुचिवेषभृदभ्युपैति ॥ ३० ॥

*(सरभसमुत्सृज्य तान्त्रिकं पाणौ गृह्णन्)*

कथमरे मदपवर्गमचूचुरस्त्वम् ।

---

अधिगम्येति । सारूप्याधिगम एव मोक्ष इत्यर्थः । तस्यापुरुषार्थत्वमाशंक्य मोक्षदशायामवस्थानप्रकारं दर्शयति स्वकीयेति । तथा च स्वकीयज्ञानस्य निःसंकोचविकासेन भगवदानन्दमेवानुभवन्ते जीवाः । सुखेन वैकुण्ठादिपदमध्यासते स एव मोक्ष इत्याचक्षत इत्यर्थः । एतन्मते भगवदानन्दानुभव एव परमपुरुषार्थ इति । तत्तु समन्वयादित्यधिकरणे स्पष्टम् ।

एवं रामानुजसिद्धान्तं संक्षेपेण प्रदर्श्य संप्रति वलिद्धा तद्वपुषे धायि दर्शितम् । देवस्य भर्गः सहसो यतोऽजनि । प्रप्रथमो हनुमान्नाम, द्वितीयो भीमसेनकः । पूर्णप्रज्ञस्तृतीयस्तु भगवत्कार्यसाधकः । इत्यादिवचननिचयनिश्चिततृतीयमरुदवतारभावपूर्णप्रज्ञापरनामधेयमध्वसिद्धान्तमुद्भावयति तथैवेति । प्रत्यक्षादीत्यादिना अनुमानशब्दयोर्ग्रहणम् जगत्सत्यत्वमिथ्यात्वनिराकरणेनाकरेषु बहुधा प्रपंचितः । अविद्यासंकटेति । अविद्याख्यावरणेन जीवस्य ज्ञानानन्दस्वरूपत्वं संसारदशायां तदनभिव्यक्तिः मुक्तिदशायां तदभिव्यक्तिरित्येतत् सर्वं पुंस्त्वादिवदित्यधिकरणे विज्ञानात्मा सह देवैश्च सर्वैः स आनन्दः सफलस्स ओजः सघरेणामुं लोकं नीयन इति जीवस्य ज्ञानानन्दादिरूपत्वं वदन्तीति श्रुतिप्रमाणं जीवस्य स्वप्रकाशत्वात्तदभिन्नानन्दादीनां जीववत्सदोपलब्धिप्रसंगात् दुःखाद्विमुक्त आनन्दी भवति ।

**तान्त्रिकः**—(*श्रवसी कर्णाभ्यां पिधाय*) रामानुज रामानुज किमहं चोरयामि ।

**श्रीवैष्णवः**—सोमसिद्धान्त, यदि प्रमाणतो महाजनानुमतमेव चौर्यमवसितम् तर्हि किं क्रियेत तत्प्रतिश्रूयताम् । (*सर्वान्प्रति*) अहो भवन्तः सर्वे साक्षिणः शृण्वन्तु ।

**तान्त्रिकः**—यदि तथा स्यात् तर्हि तव दासो भवेयम् ।

---

सोऽज्ञानाद्विमुक्तो ज्ञानी भवतीति मुक्तिदशायां तस्यागन्तुकसुखादिश्रवणाच्च । एवं च देवासुरमनुष्याः सम्यक् ज्ञानसुखविपरीताज्ञानदुःखतदुभयमिश्रस्वरूपा इति श्रुतिरप्रमाणं असुरमनुष्याणामपि सुखदुःखकादाचित्कत्वानुभवादिति प्राप्ते ब्रूमः । देवानां बाल्यानभिव्यक्तयौवनाभिव्यक्त पुंस्त्ववत्संसारदशायां ज्ञानादेरनभिव्यक्तेर्मुक्तिदशायामभिव्यक्तेश्चोपपन्नत्वान्नोक्त दोष इति व्यवस्थापितम् । तत्वत इति । नाहमीश्वर इति प्रत्यक्षेण ईश्वरो जीवाद्भिन्नः तत्सेव्यत्वात् । "यो यत्सेव्यः स तस्माद्भिद्यते" यथा भृत्याद्राजेत्यनुमानेन सत्य आत्मा सत्यो जीवः सत्यं भिदा सत्यं भिदा सत्यं भिदा मैत्रारुण्यो मैवारुण्य इति श्रुतिभिश्च जीवेश्वरौ तत्वतः भिन्नावित्यर्थः । जीवा इति । ज्ञानानन्दस्वरूपा इति प्रागुक्तम् । उत्क्रान्तिगत्यागतीनामित्यधिकरणे जीवास्तावदणव इत्युक्तम् । तदधिकरणमित्थम् । "अणुर्ह्येव आत्मायं वा एतेसिनीतः पुण्यं च पापं चेति" श्रुतिरप्रमाणम् ।

व्याप्ता ह्यात्मानश्चेतना निर्गुणाश्चेति काषायणश्रुत्या विरोधात् जीवो नाणुरिति प्राप्ते सिद्धान्तः । सोऽस्माच्छरीरादुत्क्रान्त्यामुं लोकमभिछत्यमुष्मादिमं लोकमागच्छतीत्युत्क्रान्तिगत्या गतिश्रवणादणुरेवं जीवः व्याप्ता" इति श्रुतिः ईश्वरविषया इदं सर्वं सृजतीति परमात्मप्रकरणादिति सकलाम्नायेतिकं ब्रह्मकाण्डरूपकृत्स्नवेदप्रतिपाद्यमित्यर्थः । "तत्र वसन्ते वसन्ते ज्योतिषा यजेत"

**सोमसिद्धान्तः**—तदिदं भवन्तो विमृशन्तु ।

**बुद्धादयः**—अरे कथ्यतामपवर्गस्तदीयः ।

**तान्त्रिकः**—(*कर्णे*) एवमेव ।

**बुद्धादयः**—(*श्रुत्वा विहस्य*) अये तान्त्रिक वञ्चितोऽसि पाषण्ड-कापालिकदास्येन । यतः

सारूप्यरूपं सविशेषमेतत् सदेहकैवल्यमिदं मदीयम् ।
एकीभवन्त्यत्र भवन्त एव सचेत्स राजात्र कलिः प्रमाणम् ।।३१।।

(*ततः प्रविशति कलिः*)

---

इत्येवमादिकर्मकाण्डवाक्यानामपि यथा परमेश्वरपरतया योजनं तथाकरेषु वर्णितम् । भक्त्येति । भक्तेश्च मोक्षहेतुत्वमनुबन्धादिभ्य इत्यधिकरणे स्पष्टम् ।

समाराध्येति । समाराधनं नाम सेवा । सा च त्रिविधा । अङ्कनं नाम करणं भजनं भेदः । तत्राङ्कनं नारायणस्यायुधैः । तदुक्तम् शाकल्यसंहिता-परिशिष्टे "चक्रं बिभर्ति पुरुषो विततं बलं देवानाममृतस्य विष्णोः । स याति नरकं दुरितं विधूय विशन्ति यद्यतयो वीतरागाः । देवासो येन विधूतेन सुदर्शनप्रयता स्वर्गमायन् । येनांकिता मनवो लोकसृष्टिं वितन्वन्ति ब्राह्मणा-स्तद्वहन्ति । तद्विष्णोः परमं पदं येन गच्छन्ति लाञ्छिताः । उरुक्रमस्य बन्धवोऽङ्किताः लोके सुभगा भवामः" इति । अतप्तनूर्नतदामो अश्नुते श्रृतास इद्वहन्तस्तत्समाशतेति तैत्तरीयोपनिषदपि तत्र प्रमाणम् । अंकने स्थाननियमोऽपि

"दक्षिणे तु भुजे विप्रो बिभृयाद्वै सुदर्शनम् ।
सव्ये तु शंखं बिभृयात् इति ब्रह्मविदो विदुः ।।"

इत्याग्नेयपुराणे ।

**कलिः—**

बालोऽप्ययं पटुरिति प्रतिबुध्य तत्व-
माहूय मामकृत कैः प्रणयैरविद्या ।
मह्यं वराय सदृशीं कुहनां स्वकीयां
दत्वातनिष्ट सुमहत्किल कौतुकं मे ॥३२॥

तदस्याः किमिव मया च प्रियमाचरणीयम् । (इति सकौतुकं *परिक्रामति*)

**सोमसिद्धान्तः**—राजन्कले ! विजयी भव । प्रतिपद्यतामत्र किंचिदिव दण्डनीतिः ।

**कलिः**—तत्किं नाम ।

---

सुदर्शनमहाज्वाल कोटिसूर्यसमप्रभ । इत्याद्यङ्कनमन्त्रश्चान्यत्र दर्शितः । नामकरणं केशवादिनाम्ना पुत्रादीनाम् । भजनं दशविधं सत्यं हितं, प्रियं, स्वाध्याय इति वाचा, दानं परित्राणं परिरक्षाणमिति कायेन दया स्पृहा श्रद्धा चेति मनसेति भेदात् । तदप्रसाद इति ।

ननु भक्तिरेवैनं दर्शयति भक्तिवशः पुरुषो भक्तिरेव भूयसीति माठरश्रुतेः । भक्तिरेव मुक्तिहेतुर्नतु विष्णु प्रसाद इति चेन्न । परमात्मनैव दर्शनमित्यादि श्रुत्या हरिप्रसादादेव मुक्तिर्नान्यथा । अत एव नारायणश्रुतिः "यस्य प्रसादात् सरूपात् तस्मात्प्रसादान्मुच्यते नापरेण । नारायणोऽसौ परमो विचिन्त्यो मुमुक्षुभिः कर्मपाशादमुष्मात्" इति भावः श्रवणमननादीति । श्रवणमनने आदिर्यस्य तत् ब्रह्मदर्शनेन विगलदविद्यावरणा इत्यर्थः । ब्रह्मदर्शनमेव मोक्षहेतुरिति विद्यैव तन्निर्धारणादित्यधिकरणे वर्णितम् । तच्च हरिस्वरूप नानात्वेऽपि स्वगुरूपदिष्टस्वप्रतिबिम्बभूतं भगवद्रूपदर्शनमेवेति न सामान्यादप्युपलब्धेरित्यत्र समर्थितम् ।

**सोमसिद्धान्तः**—तान्त्रिकोऽयं चोरित मदीयपुरुषार्थो मध्यस्थैरध्यवसितप्रमोषश्च प्रतिश्रुतं तु नानुतिष्ठति ।

**कौलः**—(जनान्तिकम्) अये, तान्त्रिकोऽयं वैदिकः श्रूयते । तत्कथमसावभिभावनीयः ।

---

**स्वस्वाधिकारेति** । अधिकारतारतम्यानुगुण्येन मोक्षे तारतम्यं यावदधिकाराधिकरणे निर्णीतम् । तदनुरोधेन मुक्तितारम्यानुरोधि ब्रह्मज्ञानतारतम्यं प्रज्ञान्तरपृथक्त्ववददृष्टिश्च तदुक्तमित्यत्र प्रतिपादितम् । तदनुसारेण च उपासकेन स्वस्वयोग्यगुणविशेषोपसंहारेण उपास्यो विष्णुरिति इतरे त्वर्थसामान्यादित्यधिकरणे व्यक्तम् । मोक्षे च विरिञ्चस्य पूर्णोऽधिकारः अन्येषां तु स्वस्वयोग्यतानुसारेण । स्वस्वयोग्यता च गुरोरन्यस्मात् वा कुतश्चित् सर्वज्ञादवगन्तव्येत्यन्वयादिति चेत् स्यादवधारणादित्यत्र स्पष्टमिति द्रष्टव्यम् । एवं संग्रहेण सगुणविषयमतद्वयमुपन्यस्य संप्रति प्रागुक्तमेवार्थं कापालिकम तैक्यपर्यवसानापादकचमत्कारेण कतिपयतदीयचारित्रविशेषोपन्यासेन दृढयति **सोमसिद्धान्त इत्यादिना** । तिष्ठतु वराकः किमनेनेत्यन्तेन । **पारवश्यमिति** । वक्ष्यमाणस्वमतापहारखेदप्रयुक्तमिति भावः । वैकृतं विकारः । केवलतान्त्रिकेकापालिके मद्यपानमपि संभवत्येवेत्यन्यथा परिहरति **अयं किलेति प्रत्यंगेति** । लालाटादिद्वादशाङ्गसङ्गिपाण्डरमृत्तिकारचितरेखाद्वयान्तराकनिर्निद्रहारिद्रचूर्णरेखानिबिडोर्ध्वपुण्ड्र इत्यर्थः । **भाषास्तुतिः** द्राविडभाषाप्रबन्धरूपाम् । **सरभसमिति** । अयमेव चोर इति निश्चित्येति शेषः । अवसितं निश्चितं प्रतिश्रूयतां प्रतिज्ञायताम् । **एवमिति** । परमेश्वरसारूप्यमिति कथयन्तीत्यर्थः । एतच्च स्पष्टमेव वक्तुमुचितमपि सारूप्यरूपमिति श्लोके तथोक्तमपि चौर्यापादनकृष्णेन तान्त्रिकेण लज्जया कर्णे कथितमिति ज्ञेयम् ।

वञ्चितोऽसि परिभूतोऽसि । सारूप्यमिति परमेश्वरेणेति शेषः । **संदेहेति** ।

**सोमसिद्धान्तः** – यद्येवं मन्यसे तर्हि श्रूयताम् । वयं यथा भैरवागमानुरोधेन वेदप्रामाण्यवादिनो वेदविरुद्धमधुमांसादिनिषेवणाभिर्वेदबाह्यतया पाषण्डेषु गण्यामहे तद्वदिमेऽपि पांचरात्रागमानुरोधेन वेदप्रामाण्यवादिनो वेदविरुद्धैराचारैः पाषण्डा एव । किंच द्विविधा इमे तान्त्रिकाः उदीच्याः केचित् अपाच्याः परे इति । तत्र तावदपाच्या नाम पाषण्डाः, ते पशव एव । यतः

---

नन्वत्यधिकरणे मुक्तानां किं शरीरेन्द्रियाणि सन्ति न सन्ति वा स एकधा भवति त्रिधा भवति नेह वै सशरीरस्य सतः प्रियाप्रिययोरपहतिरस्तीति श्रुतिद्वयानुरोधेन सदेहत्वविदेहत्वयोर्द्वादशाहद्वैविध्यवदविरोधात् सदेहकैवल्यमेकमादाय कापालिक साम्यापादानमयुक्तमिति चेत् सत्यम् । तथापि विवक्षिते सदेहकैवल्यस्य तत्वानुप्रवेशे तत्साम्यापादनं दुष्परिह्वारमित्यत्र तात्पर्यं सदेहकैवल्यमिति । तत्त्वत इति भावः । तेन च साम्यं दृढीकृतम् ।

अतो रामानुजीयैः भावं बादरिरित्यधिकरणे विदेहकैवल्यस्याप्यभ्युपगमेति न विरोधः ।

**एकीभवन्तीति** । अत्रेति इति शेषः । न **चेदिति** । कापालिक तान्त्रिकयोः परस्परभेदे कलिः प्रमाणं साधको न चेदेकीभवन्त्येव पाषण्डेषु भवन्त इति पादयोजना । कलिमहिम्ना वैदिका वयमिति लोकान् वंचयन्ति भवन्त इति भावः ।

यद्वा न चेदिति भिन्नं वाक्यम् । तथा च भवन्तः पाषण्डेष्वेकीभवन्तु न चेदेवमिष्यते तर्हि राजा कलिः स्वयमेव दण्डयिष्यतीति भावः ।

**बालोऽपीति** । कलियुगप्रवृत्तिसमनन्तरमेव कुहनापि प्रवृत्तेति भावः । दण्डनीतिः नीतिशास्त्रं तत्किमिति यत्र विषये दण्डनीतिरवलम्बनीया तत्किमिति सामान्ये नपुंसकम् । चोरितः मुषितः । पुरुषार्थः सदेहकैवल्यः

**अप्राकृतानकृतकानपहाय वेदांस्तत्प्रातिभट्यविनिवेशितनीचभाषाः ।**
**कर्म त्यजन्ति विहितं विहितेतराणि निर्माल्यपैतृकमुखानि वितन्वते च ॥३०॥**
हन्त बुद्धेरुपरिप्लवता ।

---

प्रतिश्रुतं प्रतिज्ञातं श्रूयत इति श्रूयते । परं न तु वस्तुतः । कथं वैदिक इति भावः । अभिभावनीयः तिरस्करणीयः । वैदिकस्य कलिनापि तिरस्कारो न संभवतीति भावः ।

**एवमिति** । वैदिक इतीत्यर्थः । तदाचारविवेचने अस्माकमिव तेषामपि तान्त्रिकत्वमेवोचितम् । तन्त्रावलम्बितमपि समानमित्याह वयमित्यादिना । **वेदविरुद्धेति** । मधु मद्यं मांसं प्रसिद्धम् । आदिपदेन श्वेतमृत्तिकोर्ध्वपुण्ड्र तप्तमुद्राधारणादि गृह्यते ।

मधुमांसादिपरिग्रहस्य च धर्मशास्त्रेषु यागीयमांसादिरिक्तमांसादि निषेधेन कलौ अयुक्तत्वात् । ऊर्ध्वपुण्ड्रादेश्चावैदिकत्वस्य पुराणादिषु प्रसिद्धत्वादिति भावः ।

**पांचरात्रेति** । अत्र कदाचित् किल विनष्टेषु देवेषु पंचसु रत्रिषु शिवकेशवौ परस्परप्रेरितौ पाशुपतपांचरात्रादीनि तन्त्राणि प्रणिन्यतुरिति पुराणकथानुसंधेया ।

तत्र "चकारमोहास्त्राणि केशवोऽपि शिवेरितः" इति वचनेन मोहशास्त्रत्वेनावगतस्यापि पांचरात्रतन्त्रस्य प्रामाण्यमुत्पत्त्यसंभवादित्यधिकरणे व्यवस्थाप्य तदनुरोधेन तदुक्ततप्तमुद्राधारणादिकमपि "अतप्ततनूर्न तदामो अश्नुत" इत्यादि श्रुतिमूलं कल्पयन्तः कथं न पाषण्डा इति भावः ।

यथा च तप्तमुद्रा धारणादिकमवैदिकं तथा प्रपंचित तप्तमुद्रा-विद्रावणादौ । अवाच्या दाक्षिणात्याः अप्राकृतान् अपभ्रंशरहितान् । अकृयकान् नित्यान् प्रातिभट्यं तुल्यत्वम् । नीचभाषा द्राविडादिभाषा । कर्म त्यजन्तीति । सर्वधर्मान् परित्यज्य इत्यादि पञ्चषाक्षरमात्रश्रवणेन अथातो

आचार्यहस्तादधिगम्य चीटीं निबध्य कण्ठेकुणपस्य दग्ध्वा ।
बैकुण्ठवीथ्यां गृहनिश्चयेन नन्दन्ति मूढाः पशवो न किं ते ॥३१॥

**कलिः**—(*स्वगतम्*) तदहमप्येवमेनं प्रतारयामि । (*प्रकाशम्*) अये प्रतिश्रुतम् । पाषण्डदास्यमनुतिष्ठापरया (?) बैकुण्ठे शसल भूमिपरिसरे तव निवेशनाय चोटिकामहं प्राहिणुयाम् ।

**तान्त्रिकः**—(*सभयम्*) राजन् यद्रोचते भवतस्तदाचरामि ।

---

महादेवस्याहरहः परिचर्याविधिं व्याख्यास्याम इत्यादिशास्त्रैर्नित्यत्वेनावगतानि शिवार्चनादीनि "नान्यं देवं नमस्कुर्याद्विष्णुपादाब्जसंश्रयः" इत्यादि तन्त्रानुसारेण श्रीरुद्रादिघटितवेदाध्ययने वाचिकशिवनमस्काराणामवर्जनीयतया "ब्राह्मणेन निष्कारणः साङ्गो वेदोऽध्येतव्य" इति शास्त्रान्नित्यत्वेनावगतं वेदाध्ययनशिवपूजनादिकमपि परित्यजन्तीत्यर्थः ।

निर्माल्येति । देवनिर्माल्येन हव्यकव्यादिकरणं तान्त्रिकं न वैदिकमिति व्यवस्थापितम् शास्त्रनिबन्धनेषु आचार्यहस्तादिति श्लोकार्थस्तदाचारे प्रसिद्धः कुणपस्य शवरीरस्य । दग्ध्वेति मृतमिति शेषः ।

तदिति । यस्मात्तु रीत्यायं केवलतान्त्रिकः तस्मादेनं प्रतारयामि वंचयामि इत्यर्थः । परधाः अननुष्टाने । शमलेति पुरीषोत्सर्जनस्थलसविध इत्यर्थः । प्रहिणुयां प्रेषयेयम् । सभयमिति शमलेत्यादि प्रागुक्तभयेन सहेत्यर्थः । उत्तुङ्गेति उत्तुंगः द्विपकुम्भ इव कर्कशः कठिनौ च कुचौ तदाभोगतो विस्तारस्तद्वतीत्थमधरगतिरिति वक्ष्यमाणकेलीचंक्रमणझलझलितमेखलं यत् श्रोणिमण्डलं तस्य भारेण मन्थरा मन्दा गतिर्यस्याः कन्दर्पेण स्वस्मिहाविर्भूतेनयो दर्पः सौन्दर्याद्यभिमानः तेन उद्धता उन्मीलन्यो मद्यपानप्रयुक्त विकारस्तेन विवशं यथा तथा व्यालोलतारे चंचलकनानिकेक्षणा स्निग्धं मसृणं यदालोकनं तेन मोहयन्तीर्थः । महाप्रभावेति परिहासोक्त्या । दुर्निवारकौटिल्येति । व्यक्तितम् । तदेवाह शास्त्रमिति । कुलार्णवादि । इहेति । एतच्छास्त्रानुसारेण

( इति श्रद्धया बद्धाञ्जलिस्तिष्ठति । )

कलिः—(पुरो विलोक्य)

उन्तुंगद्विपकुम्भकर्कशकुचाभोगा रणन्मेखल-

श्रोणीमण्डल भारमन्थरग तिः कन्दर्पदर्पोद्धता ।

उन्मीलन्मदिराविकारविवशव्यालोलतारेक्षणा

स्निग्धालोकनमोहिनी विलसति श्रद्धापुरस्तामसी ॥३२॥

(विचिन्त्य) महाप्रभावाह्येषा ।

---

देवताराधने इत्यर्थः । एकं वस्त्विति । विशेष्याभिप्रायेण सामान्ये नपुंसकम् । तथा च एकमपि न दुष्प्रापम् । किन्तु सर्वं सुलभमेवेति भावः । एवं सामान्येनोक्तं कुलमार्गस्यैहिकामुष्मिकफलसाधनत्वं हेतुत्वेन पुनरुपादानाय तदेवं विधे किकुलमार्गे लोकानामुपेक्षा न युक्तेत्याह । भोगा नित्या हि सद्यः सिद्धिप्रद इत्यनेन वश्याकर्षणादि सिद्धयः सर्वा अव्यय विलम्बेन संपद्यन्त इत्यर्थकेन कुलमार्गस्य को हि तद्वेद यद्यमुष्मिंल्लोके स्ति वा न वेति इत्याद्यर्थ-वादैः कालान्तरेऽपि संशयितसिद्धिक वैदिकमार्गापेक्षया वैलक्षण्येनोत्कर्षः सूचितः । इत्यादीत्यादिना कापालकालमुख पांचरात्रादीनि गृह्यन्ते । तथा च वाममार्गेषु बहुधा लोकान् प्रवर्त्य दक्षिणामार्गस्य गगनमनकल्पतामापादित-वतीत्यर्थः । स्वर्ग इत्यादि । अत्रायमिति । प्रत्यक्षसुखनिर्देश उत्प्रेक्षमाण स्वर्गापेक्षया च पुंस्त्वं, स्वर्गदशां स्वर्गावस्थां सत्वादिविषयसंपर्केणान्तः करणस्य सत्वं सत्वातिरेकः तेन स्फुरत्प्रकाशनेन यदात्मतत्वं तत् विश्वं आज्ञाप्रचुरं करोधिकिमित्यर्थः । सांप्रतं युक्तम् । अस्य केवलतां त्रिकस्य न्यायमेवाह यत इति । दासत्वं हि शूद्र धर्म इति भावः ।

राजन्निति । कलिसंत्रोधनम् । मध्वाख्यदासान्तरलाभं प्रपंचेनाह पुरत इत्यादि । शंखचक्रगदापद्म मुद्रानिबिडितललाटोदरस्कन्ध पूर्वोक्तप्रकारेण भुजयोस्तप्तमुद्रया दग्धः मध्वः समापततीत्युत्त रार्थस्यार्थः । तत्र मुद्रा खल्लीफलोपम्येन विशिनष्टि तिर्यगित्यर्धेन । तत्तिर्यगित्यर्धेन तत्तिर्यगिति शंखगदे ये । अतिर्यगिति चक्रपद्मयोश्चौपम्यं दृढयितुमुक्तम् ।

शास्त्रं किन्विदमप्रमाणमिह किं न प्रीयते देवता
सा प्रीता यदि किं कुहापि भुवने दुष्प्रापमेकं भवेत् ।
भोगानत्र बहून्प्रदाय परतः कैवल्यलक्ष्मीप्रदे
सद्यः सिद्धिपदे जनः कुलपथे कस्मान्न संनह्यति ॥३३॥

इत्यादि नानाविधसाधनबोधनैर्बाभ्रनैशपामरपण्डितमखिलमपि जनमिह कुलपथे महोत्सव इव निबिडयन्ती दक्षिणपथमप्रचारेण वितथमिव कृतवती । अयि श्रद्धे ! परिगृह्यतामयं तान्त्रिकः ।

---

घृतशौचेति । कुलांगनानामभिसरणदोषपरिहारायाह घृतशौचं प्रायश्चित्तमित्याभाणकमालम्ब्य चमत्कारः । यत्यन्नं च विवर्जये' दित्यादिशास्त्रमप्यविगणय्य मठ एव भोजनादि शिष्यैः सह सन्यासिभिः कर्त्तव्यमिति प्रत्यक्षसिद्धं माध्वाचारमभिप्रेत्य मठ एव स्वामिभिः क्रियत इत्युक्तम् । अदभ्रः अनल्पः अत एव दुर्भरः दुर्वहः भरो भारः तद्वती । मधुष्ठीलः मधूकफलगुच्छः "वानप्रस्थ मधुष्ठीलौ" इत्यमरः । लम्बनक्रियापेक्षया तेन तुल्यमिति । अतिम्लेच्छं ताम्रम् । मुखालुः गलन्तिकादयः पात्रविशेषाः तत्सङ्कुलः करो यस्य । प्रारब्धवायुस्तुतिः प्रक्रान्तवायुस्तुतिनामकस्तोत्रविशेषः प्रतिदिनं पाठ्यो यस्य सः । अंकुरानीत्यादि धूपार्थाङ्गारेङ्गाल धारणं पुण्ड्रेषु तन्मते प्रसिद्धम् । बलीमुखः वानरः । हिण्डते गच्छते हिडि गतौ । तथाप्यत्र

अंसे घोणी मषी फाले तीर्थनारायणः करे ।
प्रवंगगमनं चेति महामध्वस्य लक्षणम् ॥

इति श्लोकार्थसंगृहीत इति बोध्यम् । ततोऽपि रामानुजादपि तदेव प्रश्नोत्तराभ्यां विवृणोति । कलिरित्यादि । उपवासदिने एकादश्यादौ । भ्रान्त्याग्न्यादयोऽप्युपवसन्तीति भ्रान्त्यात एवाह जुहोति । अग्निहोत्रादिकमपि न करोति । न दत्ते भिक्षां वल्यादिकमपि । वाशब्दः समुच्चये । सायं जुहोति

श्रद्धा (*तथा*) ( *इति गाढमालिंगति* )

**तान्त्रिकः**—( *सुखपारवश्यमभिनयन्* )

**स्वर्गो दिवः किं गलितोऽयमुर्व्यामुर्व्येव किं स्वर्गदशां प्रपन्ना ।**
**सत्वातिरेकच्छुरदात्मतत्वं विश्वं किमानन्दमयं विधत्ते ॥३४॥**

इति श्रद्धापरवशो दासोऽहम् । ( ***इति साष्टांगं प्रणमति*** )

**राजा**—स्थाने सांप्रतमस्य न्याय्यतया दासत्वम् । अन्यथा ब्राह्मणो दास इति विप्रतिषिद्धमेवैतत् ।

**कलिः**—दिष्ट्यायमप्रयासतः प्रामाणिको दासलाभः ।

**सोमसिद्धान्तः**—राजन् एवमेव लाभान्तरमपि नः संनमति । (*पुरतो निर्दिश्य*)

**तिर्यग्गतिर्यग्विदलितपरिणतपृथुकारवल्लिभद्राभिः ।**
**मुद्राभिर्जटिलतनुर्दग्धो माध्वोऽयमापतति ॥३५॥**

---

प्रातर्जुहोति इत्यादिशास्त्रेण यावत्जीवादि वास्य सनाथेन सायं प्रातः कालावच्छिन्नजीवनादिनिमित्तकमग्निहोत्रादिकं अनश्नतापि कर्तव्यमित्यादिशास्त्रैरुपवासेऽपि कर्तव्यम् । वैश्वदेवं मृताहं समतिक्रम्य चण्डालः कोटिजन्मसु'' इति मृताहमात्रकर्तव्यतावगत पित्रादिश्राद्धमपि परित्यजन् कथं रामानुजादपि माध्वो न नीचः । तेन होमादेरपरित्यागादिति भावः ।

स्वाध्यायः ब्रह्मयज्ञः । सद्यः कलावशिष्टायामपि द्वादश्यां संगवे स्नानमाचरेदित्यादि स्मृतिसिद्धं, सङ्गवसकालमुल्लङ्घ्योदयात् प्रागेव स्नात्वा दैवेकर्मणि च पित्र्ये च पंचमेऽहनि शुद्ध्यति' । इति शास्त्रमतिक्रम्य चतुर्थदिन एव विधवाकृते प्रतिश्राद्धे भुक्त्वा चिरादेव निर्गत इत्यर्थः ।

**माध्वसिद्धान्तः**—अद्य खलु लवंगिकायां धृतशौचप्रायश्चित्तांग मभिनतीर्थस्वामिपादैः श्रीवैष्णवसमाराधनं क्रियत इति निशम्य श्रीमुष्णतोऽहमागच्छामि । (*ऊर्ध्वमवलोक्य* तदितो यावत्समयानतिपातमाचार्यस्वामिपादवन्दनमाचरणीयम् । (*इति ससंभ्रमं परिक्रामति* ।)

**कापालिकः**—(*कलिं प्रति*) राजन् य एष तव ।

अंसे बिभ्रदद्भ्रदुर्भरभरां घोणीं मधुष्ठीलव-
त्स्थुद्रम्लेच्छमुखालुसंकुलकरः प्रारब्धवायुस्तुतिः
अङ्कुरानिव पाप्मनामविरलानङ्गे मषीलाञ्छना
नाविभ्रच्चकितो बलीमुख इवोदग्रप्लुतं हिण्डते ॥२६॥

अयं तावद्दुराचारस्ततोऽपि वेदबाह्यः ।

**कलिः**—कथमिव ।

**कापालिकः**—

उपवासदिनाभ्रान्त्यामप्येष किल दुर्मतिः ।
न जुहोति न दत्ते वा पितृश्राद्धं च मुंचति ॥२७॥

---

अत्र माध्वसिद्धान्त एव तदभ्युपगन्तृपुरुषाभेदेन वर्ण्यते । अतः समाराधनं निशाम्येति प्राक्भोजनापगमनप्रतीतावपि इदानीं पारणं कृत्वेत्युक्तावपि न विरोधः । सिद्धान्ते तत्तत्पुरुषाभेदस्यापि संभवादिति ध्येयम् । समग्रा इति । विरोधिलक्षणया लेशतोऽपि नास्तीत्यर्थः । अनवलोकनीयानीति । पाषण्डमुखावलोकनं पापहेतुरिति विष्णुपुराणे वर्णितम् । अनेन राज्ञः संरंभवचनेन तोटकं नामांगम् । संरब्ध तोटकं वचः इति तल्लक्षणम् । वामेतरेण दक्षिणमार्गेण वैदिकेनेति हृदयम् । सनिर्वेदमिति जीवराजस्ववशीकाराभावादिति भावः । वस्तुविचारेति । वस्तुतत्वविचारेण किल जीवराजः पाषण्डेषु न सज्जतीति भावः ।

किंच ।

**स्नानं सांध्यविधिर्जपोऽथ हवनं स्वाध्यायमाध्याह्निके**
**देवाभ्यर्चनमित्यमून्यविकलं कृत्यानि निर्वर्तयन् ।**
**सद्यः स्नातरजस्वलाकृतपतिश्राद्धेऽमितद्वादशी-**
**काष्ठाभ्यन्तर एव पारणमयं कृत्वा चिरान्निर्गतः ॥४१॥**

**कलिः**—हन्त, समग्रो वैदिकाचारो(?) पाषण्डस्य माध्व-सिद्धान्तस्य प्रशिष्यतामपि नार्हति । अयं मूढस्तिष्ठतु वराकः । किमनेन ।

**जीवराजः**—सखे चित्तशर्मन्, अमीषां मुखान्यवलोकनीयानि । *यानि ।* तदितो वामेतरेणैव पथा मृगयाविनोदिनो वेदारण्यमधिगच्छाम ।

**पाषण्डः**—(*अपवार्य । परस्परमुखान्यवलोक्य । सनिर्वेदम् ।*) मतान्तरे बलवदभिनिवेशितोऽयमधृष्ट्योऽस्माभिरितो यथागतमपसरामः ।

**अविद्या**—(*जनान्तिकम् ।*) अयि विषयवासने, दृष्टानि खलु वस्तुविचारदुश्चेष्टितानि पाषण्डेषु । एवमग्रेऽपि शमादिभिरुपनिपत्य यदि किल राजाऽयमनुरुध्येत, तर्हि सुमहत्किल संकटमापद्येत तदितो वयमग्रत एव गत्वासूयया संनिधाप्यमानैर्मोहादिभिरस्मदीयैः शमादिप्रचारोपरोधाय निपुणतरं किमपि संनिधातव्यम् ।

---

अत्र अविद्याया वस्तुविचारप्रयुक्तभयसूचनात् उद्वेगो नाम संध्यंगम् । तदुक्तम् । "उद्वेगोऽरिकृता भीतिः" इति । अविद्याया वस्तुविचारोऽप्यरिरेव । अत एव दशरूपकालोके—

**विषयवासना**—साधु चिन्तितं भट्टिन्या ।

**अविद्या**—(*प्रकाशम्* ।) यावदमी वयमृजुनैव पथा किंचिदग्रतो गच्छामः ।

( *इति निष्क्रान्ताः सर्वे* । )

चतुर्थोऽङ्कः

---

---

"यो हि यस्यापकारी स तस्यारिः" इत्युक्तम् उपनिपत्य समीपमागम्य उपरुध्येत समीपमार्गादिति शेषः । अत्र यदि किल राजायमुपरुध्येतेति महत्किल संकटमापद्येतेति च शंकात्रासवर्णनात् संभ्रमो नामांगम् । तदाहुः "शंकात्रासौ च संभ्रमः" इति । किंच शमदमादिभिरिति शमादिकृत अविद्यापरावर्तनरूपस्य भक्त्युत्साहबीजस्य पुनरुत्क्षेपादाक्षेपो नामांगम् । गर्भबीजसमुत्क्षेपः परिकीर्तितः" तल्लक्षणम् ।

*इति चतुर्थोऽङ्कः*

---

## पञ्चमोऽङ्कः

(ततः प्रविशति सह परिवारैरविद्या)

**अविद्या**—हन्त, तदेवमतिमहति संकटे निपत्य करणीयताविमूढामिह न कोऽपि मामुपसरति ।

(नेपथ्ये)

रतिकंकणपदमुद्रितरमणीयशिरोधरालिप्तैः ।
घुसृणद्रवहरिणमदै र्घुमितामुखः स्मरो जयति ॥१॥

**अविद्या**—(*श्रुत्वा सहर्षम् ।*) अये कामः संप्राप्तः ।

(ततः प्रविशति कामः)

**कामः**—

वामांगे वदने च वक्षसि चिरादेणेक्षणालाञ्छाना
बद्धा नाम पताकिकास्त्रिनयनब्रह्माच्युतानामपि ।
सन्त्वन्ये बतके पुनर्दिविषदो मच्छासनोल्लङ्घिन-
स्तत्तादृग्विभवस्य मेऽत्र मनुजाः के नाम कीटा इमे ॥२॥

(*पुरोऽवलोक्य*) इयमितः सपरिवारा देवी (*उपसृत्य*) विजयतां देवी ।

---

अथ विमर्शसंधिं पंचमषष्टांकयोर्दर्शयन् "अङ्कावतारस्त्वंकान्ते पातोऽङ्कस्याविभागतः" इति लक्षणानुसारेणांकावताराख्यार्थोपक्षेपकेणाङ्कान्तरमारभते तत इति । लक्षणश्लोकस्यार्थो दशरूपकावलोके धनिकेन दर्शितः ।

**देवी**—इत आस्यताम् ।

**कामः**—(*उपविश्य*)

का चिन्ता मयि वो निषीदति जगद्वीरे दिशां जित्वरे
सेनार्थः पुरुषेण वोऽभिलषितस्तं ब्रूत किंचिन्मम ।
दिक्पालं द्रुहिणं मुकुन्दमथवा साक्षान्महेशं क्षणा-
न्निर्जित्य प्रमदाकटाक्षविशिखैः कुर्वे भवत्किंकरम् ॥३॥

---

यत्र प्रविष्टपात्रेण सूचित एव पूर्वाङ्कावच्छिन्न एवार्थस्तथैवाङ्कान्तरमापतति प्रवेशकादिकं बिना सोऽङ्कावतारः। यथा मालविकाग्निमित्रे प्रथमांकान्त इति । हन्तेति । अनेन

"क्रोधेनावमृशेद्यत्र व्यसनाद्वा विलोभनात् ।
गर्भनिर्भिण्ण बीजार्थः सोऽवमर्श इति स्मृतः ।। इति ।

उक्तोऽवमर्शसंधिर्दर्शितः । अस्यह्ययमर्थः । अवमर्शनमालोचनं । क्रोधेन व्यसनाद्विलोभनाद्वा भवितव्यमवश्यमनेनेत्यवधारितैकान्तफलप्राप्त्युपायात्मा गर्भसमुद्भिन्नबीजार्थसंबन्धविमर्शनादवमर्शः । यथा रत्नावल्यां चतुर्थांक इति धनिकः ।

अत्र चरति कङ्कणेति रतेर्गाढालिंगनसमयसंभावितकरभूषणचिह्नलाञ्छिततया मनोहरकन्धराच्छुरितकुंकुमक्षोदमृगमदनिरुपमपरिमल सुरभिलसकलदिगन्तवलयः स्मरो जयतीत्यर्थः ।

वामेति । एणेक्षणालक्षणाः मृगलोचनास्वरूपा स्त्रिय इति यावत्पताकिका जयपताकाः । अत्र वामांग इत्यादेस्त्रिणयनादिषु यथासंख्यं समन्वयाद्यथासंख्यालंकारः ।

**विषयवासना**—भट्टिनि ! यदि किलानेन कर्माण्यवरुद्धानि तत्र शमादेरुच्छ्वसितुमपि न भवेदवकाशः ।

**प्रवृत्तिः**—भट्टिनि, विवेको विरागमुपनिधाय यदि किल कामानवरुद्धमेव कर्म कारयति तर्हि तत्र किमप्यन्तरमधिगम्य झटिति तद्विघटने कः समर्थो भवेत् ।

**अविद्या**—(*विचिन्त्य*) पुरो दृश्यताम् ।

**कोपः स एष कुटिल भ्रुकुटीकरालं**
**वक्त्रं दधद्दमदिवासृगवेक्षणेण ।**
**उद्दण्डदण्डधरचण्डधरार्भटीक-**
**मभ्येति विभ्रमविलासकथानभिज्ञः ॥४॥**

---

यथासंख्यं क्रमेणैव क्रमिकाणां समन्वयः ।
शत्रुं मित्रं विपत्तिं च जय रंजय भञ्जय ॥ इति

तल्लक्षणोदाहरणे ।

उक्तविधया त्रिमूर्तिजये प्रसिद्धे तदितरदेवमनुष्यादिजयोऽकिञ्चित्कर इत्याह सन्त्वित्यादिकेन । नामेत्यनेन कैमुत्यनिबन्धनात् । "कैमुत्येनार्थसंसिद्धिः काव्यार्थापत्तिरिष्यते" इत्युक्तः सः । "सजितस्तन्मुखेनेन्दुः का वार्ता सरसीरुहाम्" इत्यादिष्विव काव्यार्थापत्यलंकारः ।

का चिन्तेति । अनेन मादृशी सति चिन्ता न कार्येत्युक्तमयुक्तमीदृशोसंकटे चिन्ताया दुस्त्यजत्वादित्याशङ्क्याह येनेति । यः पुरुषो वशीकार्यः स किंचित् ब्रूत इत्यर्थः । ततः किमित्यत आह, दिक्पालमित्यादि । उच्छ्वसितुमिति । यथा प्रवेशो दुर्लभ इति भावः ।

( ततः प्रविशति क्रोधः )

क्रोधः—

धर्मः कश्चन कामनानधिकृतस्तेनास्मदीयाः परा-
भूयेरन्ननुवेपते मम वपुर्हन्ताहमाविर्भवन् ।
इष्टापूर्ततपः शतात्तपरमोत्सेधं तु तत्संचयं
तूलस्तोम महाचलं पविरिव प्रध्वसंये दृश्यताम् ॥५॥

---

उपनिधाय समीपे कृत्वा । कालानवरुद्धं फलेच्छारहितं अन्तरमवकाशं तद्विघटने विवेकादिनिरासो, कोप इत्यादिकुटिलस्वभावतो वक्रा या भ्रूः तस्याः कुटिः कोपकृतं कौटिल्यं, तथा करालभयंकरं यद्वक्त्रं, तद्विशनष्टि वमदिति । दृष्टिप्रसारेण रक्तमुद्गिरदिवेत्यर्थः । उद्दण्डेत्यादि । अभ्येतीति । क्रियाविशेषणम् । उद्दण्ड उद्यतदण्डः यो दण्डधरो यमः तद्वत् चण्डतरा अतिशयेन चण्डी अर्भटी आरभटी यस्मिन् कर्मणीत्यर्थः । विभ्रमेति । विशिष्ट भ्रमेण क्रोधाध्येनेति यावत् । विलासप्रसक्तिरहित इत्यर्थः । कामनानधिकृतः कामनयनाक्रान्तः कालाभिसंधिरहित इति यावत् । अस्मदीयाः कामादयः परिभूयेरन् तिरस्क्रियेरेन् ।

ननु वेपत इत्युक्तरीत्या अतितुच्छलक्ष्यप्रसक्त्यसहतयेति भावः इदं च मम वपुर्वेपत इति परिहासवचनं लोकरीत्या । वस्तुतः स्वस्य लक्ष्यं किमपि नास्तीत्यर्थः । तथाहि मत्सामर्थ्यमित्याह हन्तेति । इष्टापूर्तादितपः शतेनान्तः प्राप्तः परः उत्सेधः निरतिशयोत्कर्षः तत्समुच्चयधर्मसमूहम् तूलस्तोमं कार्पासपुंजम् । अग्निरिव क्षणात् धक्ष्यामि भस्मीकरिष्यामीत्यर्थः ।

क्रोधात् भवति संमोहः संमोहात्स्मृतिविभ्रमः ।
स्मृतिभ्रंशनाद्बुद्धिनाशो बुद्धिनाशात्प्रणश्यति ॥

इति प्रणाडिकया क्रोधस्य अनर्थहेतुत्वात्, क्रोधेन धर्मबाधनमीषत्करमिति भावः ।

(*उपसृत्य*) विजयतां देवी (*इत्यभिमुखमुपविशति*)

**विषयवासना**—भर्तृनि । यथा प्रायशो धर्म एव कुहापि न प्रवर्तेत तथा विधातुं कः प्रगल्भेत ।

(*देवी चिन्तां नाटयति*)

(*नेपथ्ये*)

---

धर्म एवेति । "धर्मेण पारमनुविंदतीति" श्रुत्या धर्मस्य पापनिवृत्तिद्वारा विद्योत्पादनपर्यन्तत्व प्रसक्तेः । सर्वात्मनाऽधर्मो निवारणीय इति हृदयम् ।

कुहापि कुत्रपि प्रगल्भेतां समर्थो भवेत् । देहि वाचमितीदं तस्यापि देहीत्यस्य अनुकरणेन स्वरूपग्रहणात् समासः । देहीति वाचमिति इति शब्दाध्याहारो वा । इमामिति देहीत्यर्थिनानुयुक्तस्य लुब्धस्य वचनमिदमिती· मामिति निर्देशः । ततश्च इतः परं जात्वपि सकृदपि देहीति मा वदेत्यर्थः । इमामिति देहि वाचमित्युक्तिमेव निर्दिशतीति जात्वपि न ब्रूहीति यथाश्रुतमेव सम्यगिति वा बोध्यम् । पितरौ वेति । पितृविपत्तिपुत्रोत्पत्युपरागादिषु यथाशक्ति दानमवश्यं कर्तव्यम् । पुत्रजन्मनि यज्ञे च तथाचात्ययकर्मणि । राहोश्च दर्शने दानं प्रशस्तं नान्यथा निशि" । एतेषु निमित्तेषु निश्यपि दानं कर्तव्यमित्यर्थः । इत्यादिशास्त्रसद्भावोऽपि लुब्धः सर्वथा किमपि न ददातीति भावः । विपद्येताम् म्रियेताम् । ग्रही सूर्यचन्द्रौ तादृशधर्मप्रसक्तिविरोधीत्यर्थः ।

अभ्येतीति । भयंकरशरीरोपलक्षितो राक्षसो दंष्ट्राभिः करालं भयंकरं वदनं यस्य सः यमो वा स्वयं धुरि संनिधौ आगच्छत्वित्यर्थः । अर्थिनि याचके सपुस्तके अतिकृपणतया हि वैदिकः किमप्यगृहीत्वा न मुंचतीति तत्प्रयुक्तभय-लुब्धस्य यमभयादतिरिच्यते यमो हि व्याध्यादिप्रणाड्या प्राणानेव हरति नार्थम् । अतिकृपणस्तु याचकः किंचिदपि गृह्णन् सद्य एव प्राणानर्थांश्च हरति । इति विशेषादिति भावः । कण इति आदिकणस्तृणं वेति निर्देशो न तन्त्रलोभ दृष्ट्या किमपि न देयमिति फलितोऽर्थः । एव लोभं प्रशस्यानर्थहेतुत्वेन तत्तुल्यहर्ष दृष्टान्तविधयोपन्यस्यति । नेति । हृष्टो तृष्यति, दृप्तो धर्ममति·

एहि याहि यथाकामं नाहितं तेन किंचन ।
देहि वाचमिमां नैव ब्रूहि मां प्रति जात्वपि ।।६।।
पितरौ वा विपद्येतां जायतां वा सुतायुतम् ।
मिलन्तु वोपरागाश्च मिथो दद्यां न किंचन ।।७।।

---

क्रामति धर्मातिक्रमे पुनर्नरक इति हर्षस्यानर्थहेतुत्वस्मरणादिति भाव: अदेयमिति । अत्र हि भावीति शेष: । तदेव महाविषयप्रदर्शनेन निदर्शयति महीति । ततश्च यथा हर्ष: सर्वं देयं मन्यमानो संधत्तेऽर्थिनमित्यनर्थहेतु: । तथा लोभोऽपीति बोध्यम् ।

अनुपदं प्रतिपदमास्फालयन् ताडयन् हासेन उत्ताल अधिक: समुल्ललन् य: कलकल कोलाहल: तद्वान् विषाद: । खेदो दैन्य आत्मजेनेति हर्षे सति उत्साह: स्वयमेव भवतीति भाव: । वलते आयाति हर्षस्य प्रागुक्तरीत्या धर्मातिक्रमणानर्थहेतुत्वं दर्शयति वध्यमिति । वधार्हं गजस्कन्धमध्यासयामि वध्यस्य रत्ननिकरकनकाभिषेकानपि करोमि प्राणिनामत्यन्तदयितान् प्राणानपि तदर्थे विनियोजयामीत्यर्थ: । प्रतीपमिति क्रियाविशेषणम् । उक्तरीत्या हर्षस्य लोभविरोधित्वादिति भाव: । अनुजन्म हर्षानन्तरभावित्वात् । मदस्येति भाव: । आलिङ्गित इति । अत्र अवधीरणा मदसहचारिणीति रमणीत्युक्ति-प्रमाद: । अनवधानं विपदनर्थ: ।

अस्मरणं परकृतोपकारादे: । एतेषां मदे सति कदाचित्संभव: इति पुत्रैरित्युक्तम् । दूरीकृत: परित्यक्त: । विनय: प्रवणता । अलौकिकश्रेय: साधनं कर्मेति मीमांसका: । तथा च सूत्रं-'चोदनालक्षणो धर्म' इति वार्तिकं च-श्रेय: साधनताह्येषां नित्यं वेदात् प्रमीयते । ताद्रूप्येण च धर्मत्वं तस्मान्नेन्द्रिय-गोचर:" ।। इति । कर्मजन्योऽतिशयविशेष: । स्थालीव्यापार: । फलाप-वर्गीत्यन्ये । "धर्म: क्षरति कीर्तनात्" इति नाश्यत्वस्य तत्रैव स्वारस्य संभवादिति ध्येयम् । विचार: युक्तायुक्तं परीक्ष्य तेषां गन्धै: लेशैरपि । 'गन्धो गन्धक आमोद" इत्यभिधानकोश: ।

**देवी**—(*श्रुत्वा*) ननु संप्राप्त एव तादृशो लोभः ।

(*ततः प्रविशति लोभः*)

**लोभः**—

अभ्येतु घोरवपुषा धुरि राक्षसो वा
दंष्ट्राकरालवदनः स्वयमन्तको वा ।
चेतो बिभेति न तथा मम दुर्निवारे
दृष्टे यथार्थिनि सपुस्तकदर्पपाणौ ॥८॥

(*परिक्रम्य । उपसृत्य*) विजयतां देवी । *इति पार्श्वतो निषीदति*)

**विषयवासना**—(*लोभं निर्दिश्य*)

कणस्तृणं वा जगतां त्रयेऽपि न देयमेतस्य दृशास्ति किंचित् ।
न हर्षदृष्ट्या तु किमप्यदेयं मही विशाला मणिपर्वतो वा ॥९॥

---

मन्थरदृष्टिपातः । मन्थरः उपरिप्लवः दृष्टिपातः कटाक्षविक्षेपो यस्य सः । उन्मूलितालानमुत्खातबन्धेन स्तम्भ उदग्रसत्वं महाबलं गजं भूरिणा अधिकेन मदेन अन्धं विवेकशून्यं धुरि अग्रे निःसरन्तं निर्गच्छन्तं । विकटं उद्धतं, उपकण्ठे समीपे । अयं मदः धर्मेति । उक्तप्रकारेण हर्षस्यैव धर्मातिक्रम हेतुत्वे तदीयनिरतिशयपरिणामरूपस्य मदस्य तथाविधत्वे किमु वक्तव्यमित्यर्थः । मानः गर्वः ।

महदिति । महत्सु अविनयः औद्धत्यम् । आदिपदेन पारुष्यादिग्रहणम् । कमपि अत्यन्तनिवृत्तमपि अधीनयेत् अधीनं कुर्यात् । विगर्हितः निन्दितः वर्जित इति यावत् ।

नमोवाकः नमस्कारोक्तिः । आहोपुरुषिका स्वात्मनि बहुमानः मदोच्छ्रितः मदेन उच्छ्रितः उन्नतः । विज्ञानातिशयः शास्त्रीयज्ञानोत्कर्षः

(*पुरोऽवलोक्य*) हन्त स्मृतमात्र एव संनिहितः । यदेष

हस्तेनानुपदं प्रियस्य सुहृदो हस्तं समास्फालयन्
हासत्तालसमुल्ललत्कलकलः संफुल्लवक्त्राम्बुजः ।
दूरीकृत्य विषाददैन्यजडताचिन्तादिभावानसा-
वुत्साहेन सहात्मजेन वलते हर्षोऽतिमात्रोत्सवः ॥१०॥

(ततः *प्रविशति हर्षः*)

---

तेन प्रभूतः समृद्धः विभवो महिमा यस्य। अतो विश्वस्य मुख्यसेव्ये मयि स्थिते सति, वेष्टन्ते किल यत्र नद्धवृषव···लपीडनयन्त्रबद्धबलीवर्दतुल्यकेऽपि अतितुच्छाः देवालये किं वेष्टन्ते किंवा देवं वदन्ते कृकलासतुल्यं शिरसः न्यंचितोदञ्चितैः नमनोन्नमनैः सर्वज्ञे तदुचितसकलकर्मानुष्ठातरि मयि विद्यमाने देवताप्रदक्षिणादिभिः मूढैः किं साध्यत इति भावः। परेति। परेषां अयं कर्मठ इति भ्रान्त्युत्पादनेन ऐहिककिंचित्प्रयोजनोद्देशेन कृतान्यपि कर्माणि नास्तिकस्य डम्भादेः विफलानीति भावः।

**सौवर्णेति**। ताम्रारकूटाभरणेषु सौवर्णलेपनमात्रेण धगद्धगितचाकचक्यशाली अंशुजालं यस्य आभरणं किरीटाङ्गदादिविष्टब्धमूर्तिः गर्वोन्नमितकायः मिथ्याविलासरसिकः कपटचेष्टालम्पटः मिलति संनिधत्ते इन्द्र इत्यादिः इति। एवं प्रकाराः महिताः पूज्याः अंकणं चत्वारं, एतेषु मध्ये कुत्रचित्।

तथा च इन्द्रादयः मत्कटाक्षकिंकरा इति भावः। क्रियासिद्धिषु कर्मफलप्राप्तिषु, निषीदति उपविशति वितथं मिथ्याभूतं तत्वस्य आत्मस्वरूपस्य अवमर्शे श्रवणादौ उन्मुखाः प्रवृत्ताः, मनागपि ईषदपि क्रन्दिते रोदने, त्यक्त्वा, उत्प्लुत्य उड्डीय, सोऽयं उक्तप्रकारेण अध्यात्मनिष्ठानामपि, यतो मोहजनकः।

अतः केनैष जय्यः जेतुं शक्यः न केनापीत्यर्थः। "क्षय्यजय्यौ शक्यार्थे" इति निपातः।

हर्षः—

वध्यं च वारणपतेर्निदधामि कण्ठे
कुर्वे च रत्नपटलीकनकाभिषेकान् ।
न प्राणतो हि परमस्ति शरीरभाजां
तानप्यहं तृणमिव प्रतिपादयामि ॥११॥

(*इति परिक्रम्य*) विजयतां देवी (*इति लोभस्य प्रतीपमुपविशति*)

**विषयवासना**—अये हर्ष, भवदनुजन्मा मदः किं न दृश्यते ।

**हर्षः**—(*अग्रतो निर्दिशन्*) इतो दृश्यताम् ।

---

एवमुक्तप्रकारेण अपारबलविभवसारेषु अपर्यन्तबलसामर्थ्यातिसारेषु त्वदीयपरिवारेषु सत्सु असारविषयिणीभिः तुच्छतमशमादिविषयिणीभिः आकुलयसि खेदयसि । निजेति । कुले ग्राहे संततौ वा समापतितं प्राप्तं, विकटं क्रूरं, संकटं दुःखं तस्यविघटनाय हितं कार्यं राजवशीकरणं तत् घटनाय । सहजेति । उत्पत्तिशिष्टासमद्विरुद्धस्वभावाः ये शमादयः तैः कृतेन विद्या परिणेया अविद्या परित्याज्या इत्येवं रूपेण दुर्बोधनेत्यर्थः ।

अत्र परिसरे । अत्र प्रदेशे । विदितेति । मन्मथमार्कण्डेयादिष्विति भावः । समं सह उद्देशः देशः । प्राप्तावसरमिति उचितकाल इत्यर्थः । तावदिति वाक्यालंकारे ।

कियच्चिरं कियान् कालः वेदेषु पूर्वपरिभागयोः कर्मज्ञानकाण्डत्वप्रसिद्धेरादौ कर्मकाण्डेषु प्रागविद्यासन्निधापितकाम्यक्रियादर्शनमुदाहरति स्फायन्त इत्यादि पृषदाज्यगन्धिनः दधिसंसर्गेण पृषत् चित्रत्वगुणकमाज्यं पृषदाज्यं पश्वादावनूयाजादियागद्रव्यं पृषदाज्येनानूयाजान् यजतीत्यादिश्रवणात्, तस्य गन्ध एषामिति पृषदाज्यगन्धिनः क्वचित् पशुप्रयोगे कुत्रचित् आदित्यदत्तचरुकृष्णलचर्वाद्यैष्ठिकप्रयोगेषु उभयत्रापि घृते श्रपयतीति विधानात् उपस्तरणाभिधारणादिना सर्पिषत्वं चरुणमिति वा बोध्यम् । वपा

आलिंगितोऽयमनधीरणया रमण्या
पुत्रैः प्रमादविपदस्मरणैः परीतः ।
दूरीकृतो विनयधर्मविचारगन्धैः
सोऽयं मदो जयति मन्थरदृष्टिपातः ॥१२॥

(ततः प्रविशति मदः)

मदः—

उन्मीलितालानमुदग्रसत्वं मदावलं भूरिमदान्धमेतम् ।
बाले समालम्ब्य बलाद्विकर्षन्निवर्ततेऽयं धुरि निःसरन्तम् ॥१३॥

(इति विकटं परिक्रम्य हर्षोपकण्ठे निषीदति)

---

पशोरवयवविशेषः। पयोदपटली मेघमाला, तस्याः सौहित्यं तृप्तिः तदाश्रयनाडिन्धमन्ती उद्भावयन्तीति तयोक्ताः नाडीमुष्ट्योश्चेति खशि शित्वात् यमादेशे, अरुर्द्विषत् इत्यादिना मुगागमः। व्योमपथं आकाशमार्गं। तरन्ति लंघयन्ति। मघभुजा देवानां संचारस्य उपर्यारोहणस्य निःश्रेणिका इव निःश्रेणिकाः अत्यन्तनिबिडत्वात् तदुपरि समारुह्य देवाः संचरन्तीति भावः प्रक्रीडदिति। शुकः पुमान् शारिका स्त्री' आदिशब्देन व्यक्तवाचोन्यापि तिरश्चः समुच्चिनोति शश्वत् पुनः पुनः समाश्रावित प्रत्याश्राविताभ्यां विस्पष्टाश्रवयास्तु औषडिति शब्दाभ्यां मुह्यन्तः ये ऋत्विजः तैः अपथे अस्थाने प्रक्रान्तिः आरम्भः। तच्च संदेहात्। सुमतयः पण्डिताः। साणाहाः आत्मीयवैदुष्यप्रकटनाय युक्तायुक्तविचाररूपनिजवाग्व्यापारोचित अवसर-प्रतीक्षां कुर्वाणा एते जाग्रतीति संबन्धः तथा च अग्निहोत्रादिशाला सन्नि-हिताभ्यां शुकशारिकाभ्यामाश्रावयास्तु श्रोषडिति उच्चारिते अध्वर्युणाग्नीध्रेण च उच्चारितमिति भ्रमात् प्रशास्त्रादिभिः प्रैषादिषु उच्चार्यमाणेष्वयुक्तमिदमिति संदिहानैर्विद्वद्भिः स्वविद्याविशदीकरणाय कोलाहलः क्रियत इति भावः। एवं सामान्यतः काम्यकर्माणि प्रशंस्येदीनां विशिष्य प्रशंसति। विहितेति। यच्चातुर्मास्यैर्यजत इति वाक्यविहिता वैश्वदेववरुणप्रणसादय इष्टय

**प्रवृत्तिः**—भट्टिनि, यथाह्ययं धर्मातिक्रमादिना कीदृशमप्यस्मदधीनं करोति, तथैव मानोऽपि महदविनयादिना कमपि मदधीनयेदेव । तथाह ह्येष

विगर्हितनमोवाको विनयादिपराङ्मुखः ।
आहोपुरुषिकाप्रेयानायान्मानो मदोच्छ्रितः ॥१४॥

(*ततः प्रविशति मानः*)

**मानः**—

इष्टापूर्तसहस्रलब्धपरमापूर्वातिपूतात्मके
विज्ञानातिशयप्रभूतविभवे विश्वैकवन्द्ये मयि ।
वेष्टन्ते तिलयन्त्रनद्धवृषवत्किं कोऽपि देवालये
वन्दन्ते कृकलासवच्च शिरसः किं न्यंचितोदंचितैः ॥१५॥

(*इति परिक्रम्य*) विजयतां देवी (*इति क्रोधसमीपमधिवसति*)

---

मतिमतां अर्थो समर्थो विद्वानित्युक्तम् । वैदग्ध्यशालिनं पर्वसु फाल्गुन्यां पौर्णमास्यां चैत्र्यां वेत्यादिना पर्वसु विधानादक्षय्यं हि वै चातुर्मास्ययाजिनः सुकृतं भवतीत्यक्षय्यसुकृतार्थत्वात् काम्याः क्रियाः तदेवाह अक्षय्या इत्यादि । प्रमदासु तु मतिमतां रसिकानां विहितेष्टयः संपादितमनोरथाः काम्यक्रियाः स्पृहणीयवीक्षण भाषणादिक्रियाः अक्षय्या नित्यैकरूपपूर्वा अद्भुततारुण्यलावण्यादि लक्ष्मीविराजिता इत्यर्थः विहरतीत्यादि क्वचित् सौत्रामणिलक्ष्मीः । कौकिली चरकाख्यसौत्रामण्योः श्रीः । विस्मयनीया विस्मयगोचरतया विहरति क्रीडतीत्यर्थः । संपूर्णः द्रोणकलश पूत भृदादिपात्रेषु समृद्धः सोमः अभिषवेण द्रवीभूतः यासां मुखे अग्रे ता अत एव स्फीतरसाः क्रियाः किंचिद्भान्ति । संपूर्णेत्यादि स्फीतरसा इत्यन्तं एकं वा पदं तत्र, सोममुख्यः सोमप्रधानः, स्फीतः अधिकः आमीक्षादिः तद्रसो यासां ता इत्यर्थः ।

**विषयवासना**—भट्टिनि लोभमहिम्ना कर्म कुहापि प्रायशो नानुतिष्ठेदेव। कथंचिदनुष्ठितान्यपि परातिसंधानेन विफलयतापि केनचिद्भवितव्यम्।

**प्रवृत्तिः**—(*पुरतो निर्दिश्य*) सोऽपि संनिहित एव। यदेष

सौवर्णलेपनधगद्धगितांशुजाल-
मापादचूडमयमाभरणं दधानः।
विष्टब्धमूर्तिरतिधीरगतिः प्रसन्नो
मिथ्याविलासरसिको मिलतीह डम्भः ॥१६॥

(*ततः प्रविशति डम्भः*)

---

अत्र संपूर्णसोममुख्यः स्फीतरसाश्चेति श्लिष्टविशेषणद्वयेन संपूर्णचन्द्रवदनाः समृद्धशृंगाररसा इत्यर्थः। केन नायिका अपि प्रतीयन्ते। कमलेति। कमला लक्ष्मीस्तया उल्लासी प्रकाशमानं, पद्यत इति पदम्। स्वर्गादि यासां कमनीयं स्पृहणीयं विचित्रं आश्चर्यं भूरि अधिकं भोग्यं भोगसाधनं वस्तु रम्भाद्यप्सरसः संघादि यासामासां काम्यक्रियाणां, काम्यन्त इति कामाः स्वर्गादयः, मीमांसकैः कामशब्दस्य फलपरत्वव्यवस्थापनात्। तथा च कामेषु स्वर्गादिषु लोकेषु परितः स्फुरत् अमृतं यस्य स्वर्गादिभोगेष्वमृतमप्यास्वाद्यत इत्यभिप्रायः। मुखद्वारीभूतं अपूर्वं सुखं स्वर्गादि आतनोतीति क्रियास्वभाव कथनेन कमलं पद्ममिव उल्लासि पदं चरणं यासां कमनीयविचित्र भूरिभोग्यानां स्रक्चन्दनादिनानाविध भोगसाधानसंपन्नानां कामेन मन्मथाविर्भावेनेति यावत्। तेन परिस्फुरदमृतं मुखमिति नायिकास्वरूपनिरूपणमपि गम्यते।

अत्र पक्षे अमृतमिति अधररसोऽतिशयोक्त्या बोध्यः। निर्वर्णनेन प्रत्यक्षीकरणेन।

नन्विति। तथा च किमाश्चर्यमिति भावः दुरात्मनेति। अत्र कामदोषप्रख्यापनात्। दोषप्रख्यापवादस्यादित्युक्तमवमर्श संधेरंगनिबद्धम्।

**डम्भः—**

**इन्द्रः कुबेर इति ये महिताः सुरास्ते**
**बाह्याङ्कणं निबिडयन्ति निरन्तरं मे ।**
**एतेषु मे यदिह किंचिदुदंचितभ्रूः**
**किं किं न सिद्ध्यति जनस्य मदाश्रितस्य ॥१७॥**

(*इति परिक्रम्य*) विजयतां देवी। (*इति सर्वेषामग्रतस्तिष्ठति*)

**विषयवासना—**भट्टिनि, तदेतेषां क्रियासिद्धिषु महाप्रभावो मोहः सहकारी।

---

परिणतानि पक्वानि स्वर्गादिफलानि येषु तदागमैर्वेदैर्युक्तं देशमिति। विवक्षितोऽर्थः। पक्वाम्रादिफलनिबिडितरुषं मण्डितं प्रदेशमिति प्रतीयमानोऽर्थः। शस्त्रेत्यादि अप्रगीतमन्त्रसाध्या स्तुतिः शास्त्रम्। आज्य प्रउग मरुत्वतीत्यादि प्रगीतमन्त्रसाध्या स्तुतिः स्तोत्रम्। बहिष्पवमानाज्यमाहेन्द्रवैतानान् वितानो यज्ञः तत्संबन्धिनः पावकान् आहवनीयानग्नीन् प्रतस्य झरी प्रवाहः। तेन किञ्जल्कितं पूर्णमग्रमाधारसंभेदेनाहुतीः प्रतिपादयन्ति।

मध्येऽग्नेज्याहुतिः पशुाहुतीः पुरोडाशाहुतीरिति जुहोत्यादिशास्त्रोक्तः प्रदेशो येषां तान् पूतानित्यत्र हेतुः। पावनेत्यादि पावनानि हवींषि सोमाज्यादीनि तेषां गन्धैरनुबन्धः संबन्धो येषां तानपि तथा च शास्त्रस्तोत्रघोषामाहुतिशतसंनिधानानग्नीन् तद्गन्धचोरान् समीरानपि परित्यक्तुमक्षमोऽस्मीति भावः।

लब्धेति। लब्धस्य धनादेः अपरित्यागे अभिलाषः इदं न परित्यजेयमितीच्छालोभ इत्यर्थः।

आ इत्याश्चर्ये। इह जीवराजे लब्धप्रसरः लब्धसंचारः लोभहतकोऽपि लोभाख्यो अतिगर्हितोऽपि काम्योपासनानां वामदेव्यदहरशाण्डिल्यादिविद्यारूपाणां प्रकाशात्मकत्वमभिप्रेत्य तद्रूपा उपासनां निरूपयति **तटि इत्यादि।**

(ततः प्रविशति मोहः)

( मोहो देवीं प्रणम्य तदन्तिके निषीदति )

भट्टिनि श्रूयताम् ।

ये संसारपथं विचिन्त्य वितथं तत्त्वावमर्शोन्मुखाः
संनह्यन्ति भृशं मनागपि शिशोराकर्णिते क्रन्दिते ।
हित्वा तत्वकथामपास्य नियमानुत्प्लुत्य धावन्ति ते
मोहः सोऽयमलंघनीयमहिमा केनैप ज़य्यो भवेत् ॥१८॥

**विषयवासना**—तदेवमपारबलविभवसारेषु निजपरिवारेषु किमसारविषयिणीभिराशंकाभिरात्मानमाकुलयसि ।

**अविद्या**—भोः कामादयः श्रूयन्ताम् । निजकुलसमापतित-विकटसंकटविघटनाय हितकार्यघटनाय चायमवसरः । अतो मया किंचिदभिधीयते । तदवहितैरेव भवद्भिराचरितव्यम् ।

---

तडिद्भिः जटिलिताः निबिडिताः, तरणीनां सूर्याणां कोटिभिः परंपराभिः नभस्थलं गगनतलं, उपस्थितैः उद्भूतैः तौर्यत्रिकैश्च नृत्तगीतवाद्यरूपैरपि हास्यत इति योजना । किंच सुधेव मधु, मधुसुधा तस्य यः प्रवाहः तस्य यन्माधुर्यं तस्य निरन्तरं धुरन्धरैः सौरभैः मनोविनोद्यते लाल्यत इत्यर्थः ।

अत्र उपासनानां तौर्यत्रिक परिमलश्च शिवक्षेत्रसन्निधिकृत इति वाच्यार्थो बोध्यम् । विद्यास्वरूपे तु सर्वगन्धः सर्वरसः । अथ यदि गन्धमाल्य-लोककामो भवति सङ्कल्पादेवास्य गन्धमाल्ये समुत्तिष्ठतः । गीतवादित्रे समुत्तिष्ठेतेति वचनेन तदनुसंधेयत्वेन तत्संबन्धो बोध्यः । संघीभूयेति यद्यपि परब्रह्मविद्यास्वेकैव विद्या यावज्जीवं वर्तनीयेति । बहूपासनासन्निधानमेकस्य जीवराजस्य न युक्तं, तथापि राज्ञो यत्र कुत्राप्यभिनिवेशेनातिसंधानाय देव्या काम्योपासना युगपत् संनिधापिता इति तदनुरोधादेवमुक्तम् ।

**कामादयः**—यदाज्ञापयति देवी ।

**अविद्या**—सहजसिद्धविरुद्धस्वभावशमदमादिकृतदुर्बोधनेन मयि विरसीकृतात्मा देवश्चित्तशर्मणा साकमत्र परिसरे निमिषमात्रा एव संनिदधीत । ततः पूर्वमेव शिवतद्भक्तिप्रभावैर्युष्माभिरप्रमादमेव निजनिजपरिवारैः सममयमुद्देशः सर्वोऽपि यथा शमदमादीनामीषदुच्छ्वसितुमपि नावकाशः, तथा निबिडयितव्यः ।

**कामादयः**—प्राप्तावसरमेव पराक्रमयिष्यामस्तावत् यदादिशति भट्टिनी । *(इति कामादयो निष्क्रामन्ति)*

*( ततः प्रविशति चित्तशर्मणा सहजीवराजः )*

**राजा**—*(पुरोऽवलोक्य)* कथमत्रैव सपरिवारा देवी ।

*(सर्वाः ससंभ्रममुत्तिष्ठन्ति)*

---

दिवस्पतिः इन्द्रः । 'शतमन्युर्दिवस्पति'रित्यमरः । कुत इत्यत आह इमा इत्यादि अनुपाधि निर्निमित्तं, विनीताः प्रकृत्या तथापि विकत्थनामात्मप्रशंसां परगर्हामिति च वर्जयेदिति धर्मशास्त्रविरुद्धामात्मश्लाघां सविनयादरं विनयः प्रहृता, आदरः प्रीतिः ताभ्यां सह अर्हणीयाः पूजनीयाः, सभयमिति ऊर्ध्वं प्राणा ह्युत्क्रामन्ति यूनस्थविर आगते । प्रत्युत्थानाभिवादाभ्यां पुनस्तान् प्रतिपद्यत इति धर्मशास्त्रविहित प्रत्युत्थानाद्यभावप्रयुक्तभयेन सहेत्यर्थः । प्रश्रयः विनयः । अभ्युद्गमं अभ्युत्थानम् । संभावयति पूजयति ।

छान्दोग्ये द्वितीयाध्यायेऽनेकविधविद्यासत्वेपि संसारिणो जीवस्य वशीकरणं योषिदादिविषयरामणीयकप्रयुक्तमतिसुकरमिति तात्पर्येण वामदेव्योपासनां प्रथमं निरूपयति इष्टेति । इष्टं यागः तस्यांगानि, परम्परया हिंकारादीनि जपे यस्य यूप इत्यत्रैव परंपरासंबन्धेऽपि षष्ठीसंभवात् । तेषु लक्षितः दृष्टः रतेः संभोगस्य क्रमः पूर्वापरीभूतव्यापारनिकरः योषिदुप-

**प्रवृत्तिः**—देव, कियच्चिरमभूदस्माकमिहागतानाम् ।

**राजा**—चित्तशर्मन्, इतोऽपि कियदन्तरे वेदारण्यभागः ।

**चित्तशर्मा**—ननु प्रविष्ट एव । यदिदानीम्

स्फायन्ते पृषदाज्यगन्धिन इमे वाताः क्वचित् कुत्रचित्
सर्पिष्मच्चरुशंसिनः क्वचिदपि स्निग्धा वपामोदिनः ।
एते चानुपदं पयोदपटलीसौहित्यनाडिंधमा
धूमा व्योमपथं तरन्ति मखभुक्संचारनिःश्रेणिकाः ॥१९॥

अपि चात्र

प्रक्रीडच्छुकसारिकादिपटलीशश्वत्समाश्रावित-
प्रत्याश्रावितमुह्यदृत्विगपथप्रक्रान्तिसंदेहतः ।
एते जाग्रति साग्रहाः सुमतयः सभ्याः समं यज्वभि-
र्वैदुष्यप्रथनाय वागवसरौचित्यप्रतीक्षाकुताः ॥२०॥

यावदिह प्रविश्य चक्षुषी विनोदयामः । (*इति सर्वे तथा कुर्वन्ति*)

---

मन्त्रणादिः । उपमन्त्रयते सप्रस्तावस्त्रिया सह शेते, सउद्गीथः प्रतिस्त्री सह शेते सप्रतिहारः । कालं गच्छति, तन्निधनमिति श्रुत्युक्तः । तेन शोभिताात एव श्रृंगारिणी श्रृंगाररसालम्बनविभावनायिकाविषयत्वादिति भावः । वामदेव्या वामदेव्याख्यसामसंबन्धीनि ।

आयुरिति । स य एवमेतद्वामदेव्यं मिथुने प्रोतं वेदमिथुनी भवति, "मिथुनान्मिथुनात् प्रजायते सर्वमायुरिति ज्योक् जीवति महान् प्रजया पशुभिर्भवति महान् कीर्त्येति श्रुतिः ।"

क्रत्वङ्गेति । यद्यपि हिंकारादयः पंच साम्नां भागा भक्तय इत्युच्यन्ते । ते च दाशमिकन्यायेन साम्ना स्तुवीतेति विधेस्तोत्रांगं कथंचिद्भवन्ति न क्रत्वंगं तथापि प्रागुक्तरीत्या परम्परयांगत्वमिति बोध्यम् ।

**राजा**—(*समन्तादवलोक्य। सानन्दम्*)

**विहितेष्टयो मतिमतां पर्वसु काम्यक्रिया एताः।**
**प्रमदा इव खलु रमयन्त्यच्चय्याः पूर्वसंपदुल्लसिताः ॥२१॥**

**अपि च**

**विहरति विस्मयनीया क्वचन सौत्रामणीलक्ष्मीः।**
**संपूर्णसोममुख्यस्फीतरसाश्च क्रियाः क्वचिद्भान्ति ॥२२॥**

(*विमृश्य*)

**कमलोल्लासिपदानां कमनीयविचित्रभूरिभोग्यानाम्।**
**आसां कामपरिस्फुरदमृतं मुखमातनोति सुखम् ॥२३॥**

**विषयवासना**—(*जनान्तिकम्*) सखि प्रवृत्ते, काम्यक्रियाणामासां निर्वर्णनेन तत्फलप्रशंसया च कामाविष्ट इव दृश्यते देवः।

---

हिंकारेति। हिंकारस्य रथन्तरादिसामसु स्वाध्यायपाठाभावेऽपि सकृद्धिङ्कृत्य बहिष्पवमानेन स्तुवीरन् पर्यायादिषु हिंकारस्तुवीरन्निति। द्राह्यायणादिभिस्तोत्रादौ हिंकारकर्तव्यताबोधनाद्धिङ्कारस्य सामभागत्वमवसेयम्। एतदेवाभिप्रेत्य छान्दोग्ये पंचविधसप्तविधसामोपासनाविधिषु हिंकारः प्रथमं गृह्यते। योषिदित्यादि। उपमन्त्रणं संकेतकरणं, सहशयनं पर्यंकगमनं, ज्ञापयते सप्रस्तावः। प्रतिस्त्री सह शेते। सप्रतिहारः कालं ग छति। तन्निधनमिति। त्रयमादिपदेन गृह्यते तत्र ज्ञपनं तोषणं प्रतिस्त्री सह शयनं स्त्र्यभिमुखीभावः "कालं गच्छति मैथुनेन पारंसमाप्तिं गच्छति" इति श्रुत्यर्थः।

अङ्गेति। अंगेषु सामभागेषु हिंकारादिषु अवबद्धा आरोपितविषयाः। उपासनेति। संबन्धः। "अंगावबद्धास्तु न शाखासु हि प्रतिवेदमिति" सूत्रोक्तोपासनेति बोध्यम्। सरोमांचः हर्षसंफुल्लः कपोलो यथा तथा। प्रतिनियतवृत्तिः व्याप्य। संकटं कष्टं अन्यतो मुखयितुमन्यतो मुखं कर्तुम्।

**प्रवृत्तिः**—ननु महाप्रभावः कामः ।

**चित्तशर्मा**—(*स्वगतम्*) हन्त प्रमादः । दुरात्मना कामेनाभिभूयमानः सव्याजमन्यतोऽवकर्षणीयो देवः । (*प्रकाशम्*) पदान्तर एव परिणतफलागममिमं प्रदेशमासाद्य विश्रमसुखमनुभूयतां देवेन ।

---

**गजेति** । यथा मदालसो गजः सन्निहितमपि शब्दादिविषयं न गृह्णाति निमीलिताक्षश्च भवति तथा मदपरवशो जीवराजोऽपीति भावः । संकेतयते विषयान्तरप्रदर्शनेनाकर्षणीयो राजेति इंगितेन सूचयति ।

**ऋग्यजुरिति** । ऋाक् च यजुश्च सामश्च ऋग्यजुःसामानीति पदद्वन्द्वः । तेन ऋग्यजुषेति नापादनीयम् । द्वयोरेव द्वन्द्वे अचतुरेत्यादिना ऋग्यजुषेति निपातनात् । ऋग्यजुः सामेत्युपलक्षणम् । इतिहास पुराणब्रह्मपुष्पैरित्यपि द्रष्टव्यम् । इतिहासपुराणं पुष्पं ब्रह्मैव पुष्पमिति च श्रवणात् । अत्र ब्रह्मशब्देन प्रणवो गृह्यते । शब्दाधिकारादित्युक्तम् । भाष्ये ऋगादिशब्दैश्च तस्मादुच्चैऋचा क्रियत इत्यादाविव ऋगादिप्रायवेदाः गृह्यन्ते । ऋग्वेद एव पुष्पं, यजुर्वेद एव पुष्पं, सामवेद एव पुष्पमित्यस्यामेव विद्यायां दर्शनात् । ऋग्यजुः सामपुष्पैरिति च हेतौ तृतीया । ऋगादिशब्दाश्च ऋग्वेदादिविहितकर्मपराः । तथा च कर्मभिर्हेतुभिः रचिता संभृता रुचिरा । अतिशयिता शोभाकर्मफलयश आदि परिणाम रोहितादिरूपात्मकः प्रकाशः आदित्यरूपः यस्या इत्यर्थः । असौ वा आदित्यो देव मधुयशस्तेज इन्द्रियं वीर्यमन्नाद्यं रसो जापते तद्वाक्षरत्तदादित्यमभितो श्रयन्तद्वा एतद्यतेतदादित्यस्य रोहितं रूपं शुल्कं रूपं कृष्णं रूपं परः कृष्णरूपं मध्ये क्षोभत इवेति च श्रुतेः । तदेवाह **द्रुतेति** । द्रुतेत्यनेन "तद्वक्षरदिति" श्रुत्यर्थः । निगमेत्यादिना ऋगादिवेदसाध्यकर्मफलरूपरससमूहस्फुरद्दिव्यरोहितादिरूपेत्यर्थकेन ऋग्वेद एव पुष्पं यशस्तेज इत्यादिरोहितं रूपमित्यादि श्रुत्यर्थश्च संगृहीतः ।

**सदमृतेति** । सद्यदमृतं उक्तकर्मफलरूपं तस्य वसुरुद्रादित्यसाम्राज्यस्य आधिपत्यस्य च दात्री एतदेवममृतं वेद वसूनामेवैको भूत्वाग्निनैव

**राजा**—तथा (*इति किंचिदन्यतो गत्वा परतो निर्दिश्य*)

शास्त्रस्तोत्रमयीर्गिरः श्रुतिपुटीसौहित्यनाडिंधमा
वैतानानिह पावकान्कृतझरीकिंजल्किताग्रानपि ।
अंगान्युत्पुलकानि मे विदधतः पूतांश्च त्रातानिमा-
न्हातुं न प्रभवामि पावनहविर्गन्धानुबन्धानपि ॥२४॥

---

मुखेनैतदेवामृतं दृष्ट्वा तृप्यति स एतदेव रूपमभिसंविशत्त्येतस्माद्रूपादुदेति स यावदादित्यः। पुरस्तादुदेता पश्चादस्तमेतां वसूनामेव तावदाधिपत्यं स्वाराज्यं पर्येत रुद्राणामेव तावदाधिपत्यं साध्यानामेव तावदाधिपत्यमिति च श्रवणात् । विलसति प्रकाशते, मधुविद्या असौ वा आदित्यादेव माध्वेत्यारभ्याम्नाता मधुदृष्ट्यादित्योपासना वीतदोषा वामदेव्यविद्यायामिवात्र न काञ्चन परिहरेदित्युक्त शास्त्रातिक्रमप्रसंगस्यात्राभावत् । तद्यत् प्रथममममृतं तद्वसव उपजीवन्त्याग्निा मुखेन न वैदेवा अश्नन्ति न पिब्रन्त्येतदेवामृत दृष्ट्वा तृप्यति त एतदेव रूपमभिसंविशन्ती, एतस्माद्रूपाद्यन्ति वसूनामेव तावदाधिपत्यं पर्येत इत्यादि श्रुत्यर्थं यस्मिन्न भासते सूर्यो न चन्द्रो न च पावकः यस्य भासा विभातीदमित्येषां शाश्वती श्रुतिरिति, न तत्र सूर्यो भातीति श्रुत्यर्थसंकलनवचनन्यायेन न यथा श्रुत्येव सङ्कलयति । श्रूयतहीत्यादिना । आम्नायेति । आम्नायसाध्यकर्मफलरूपमित्युक्तं प्राक् । अग्न्यादित्यादिपदेन इन्द्रवरुणसोम ब्रह्मणां समनन्तरखण्डचतुष्टयाम्नातानां ग्रहणं दृष्ट्वेति यश आदि तत्तदिन्द्रियैरनुभूयेत्यर्थः। दृशोः सर्वकरणद्वारोपलब्ध्यर्थत्वात् अभिनन्दति यश आदि भावपरिणतरोहितादिरूपममृतमनुभूय तृप्यतीत्यर्थः। किं ते निरुद्यमास्तृप्यन्ति नेत्याह तदेवेति । तद्रोहितादिरूपं प्रति रोहितादिरूपं प्रतीक्ष्य पद्यन्ते अधुना भोगावसरो नास्माकमिति बुद्ध्वा संविशन्ति । मदासते यदा भोगावसरस्तत एव रोहितादिरूपादमृतादेव तद्भोगनिमित्तमित्यर्थः। उद्यन्ति उत्साहवन्तो भवन्तीत्यर्थः।

**अविद्या**—सखि विषयवासने, लब्धापरित्यागाभिलाषस्वभावेन लोभेनापि वशीकृत इव देवः। यदयमिमान्विषयान्न परित्यक्तुमुत्सहते।

**चित्तशर्मा**—(*स्वगतम्*) आः किमिह लब्धप्रसरो लोभहतकोऽपि भवतु। निवारयाम्येनमितोऽपि गुणवद्विषयान्तरप्रदर्शनेन। (*प्रकाशम्*) वयस्य, किंचदत्र परभागे दीयतां दृष्टिः।

**राजा**—(*विलोक्य। साश्चर्यम्।*)

तडिज्जटिलिता दिशस्तरणिकोटिभिर्भास्यते
नभः स्थलमुपस्थितैरनुपमैश्च तौर्यत्रिकैः।
मनोऽपि च विनोद्यते मधुसुधाझरीमाधुरी
निरन्तरधुरंधरैर्निखिलदुर्लभैः सौरभैः ॥२५॥

वयस्य, किमेतद्विमृश्यताम्।

(*चित्तशर्मा संकल्पं पश्यति*)

**संकल्पः**—(*विचार्य*) देव, काम्योपासनाः संघीभूय भवदनुजिघृक्षया संनिदधते।

---

एवमुक्तप्रकारं वेद सवस्वादिवत् सर्वं तथैवानुभवति, तत्साम्राज्यं वस्वादितुल्याधिपत्यं अविनाशित्वं स्वाराज्यं तच्च त्रिदशामरत्वन्यायेन बोध्यम्। पर्येता परितो गन्ता इत्यर्थः। सर्वोऽप्ययमर्थः छान्दोग्यभाष्ये स्पष्टः। स्वरूपेति। मधुविद्याया इतिशेषः। स्वरूपमुक्तं महिमा विद्यान्तरादुत्कर्षः। फलं वस्त्वादितुल्यभोगः। सौवर्गेति। आदित्यस्य स्वर्लोकवर्तित्वात् तल्लोकसुखानुसंधानमुक्तम्।

अत्र च सौवर्गशब्दप्रकृति स्वर्गशब्दः स्वर्लोकपरः। अन्यथा अयं न दुःखेनेत्युक्तसुखपरत्वेऽनन्वयापत्तेः चिन्तितमनुवदति नेदीय इति। अतिसन्नि-

*( ततः प्रविशन्ति काम्योपासनाः )*

**काम्योपासनाः**—विजयतां देवः ।

**राजा**—

बृहस्पतिर्मे स कियान् वचः क्रमे
दिवस्पतिर्वा विभवेषु मे कियान् ।
इमा दुरापास्तपसापि भूयसा
यदाविरासन्ननुपाध्युपासनाः ॥२६॥

**चित्तशर्मा**—*(स्वगतम्)*

विनीतोऽयं विभुर्हन्त वितनोति विकत्थनाम् ।
महतामपि दुष्टात्मा मानो हि दुरतिक्रमः ॥२७॥

*(प्रकाशम्)* वयस्य, सविनयादरमिमा महोपासना यथोचितमर्हणीयाः ।

**राजा**—तथा *(इति सभयं परावृत्य सप्रश्रयादरमभ्युद्गमं नाटयन् यथोचितं संभावयति ।)*

---

हितरवर्णदीसलिलसंसर्गशीतले पुष्पोत्करैः पुष्पसमूहैः, स्फारामोदिनि निरन्तरपरिमलमेदुरे प्रासादो वैजयन्तादिस्तस्य शृंगं शिखरं तदुदरे मध्ये पुंभावेन पुरुशायितेन अलसाः। अत एव भव्याः रमणीया दिव्यमहिलाः रम्भाद्यप्सरसस्तदीयबिम्बफलारुणाधारामृतास्वादने तथा प्रसिद्धा सुखसंततिः, जात्वपि सकृदपि मुह्यति मोहं भजति ।

स्मृतीति । यस्या मधुविद्याया स्मरणमपि व्यामोहाय सा प्रत्यक्षमविवेकिभिर्दृष्टा कथं वा न व्यामोहयेदिति भावः । विकारं कामविकारमासादिता प्राप्ता, मदयति मत्तं करोति । विवेकेति नित्यानित्यवस्तुविवेकशमदमादसाध्या केवलब्रह्मविद्या न भवतीत्यर्थः ।

**संकल्पः**—(*पुरतो निर्दिश्य*)

इष्टांगलक्षितरतिक्रमशोभितैषा
शृंगारिणी विजयते धुरि वामदेव्या।
आयुः सुदीर्घमभिनन्द्यगुणान् कुमारान्
हृद्यां च कीर्तिमियमातनुते हि विद्या ॥२८॥

**चित्तशर्मा**—उपपद्यत एव। क्रत्वंगभूतर्हिकारप्रस्तावोद्गीथ-प्रतिहारनिधनेषु योषिदुपमन्त्रणसहशयनाद्यभेदप्रतिपत्तिरूपेयमंगाव-बद्धोपासना बहुफला कल्पलतेव कस्य वा मनो न हरति।

---

**आसादित इति**। अत एव खलु सपदि मधुविद्याभिनिवेशमवधूय विषयान्तरे दत्तदृष्टिर्देव इति भावः।

**कैषेति**। राज्ञा पृष्टः संकल्पो एषां यदिदमस्मिन् ब्रह्म परे दहरं पुण्डरीकं वेश्म दहरोऽस्मिन्नन्तराकाशस्तस्मिन् यदन्तस्तदन्वेष्टव्यम्। तद्वा व विजिज्ञासितव्यमित्यारभ्य छान्दोग्याष्टमाध्यायाम्नातस्वरूपगुणफलविशिष्टो दहरविद्येत्याह कामपीति।

**अत्र** दहरविद्याव्यापारसाधारण्यात् समासोक्त्या सकलगुणरमणीय-रमणधुरीणवशंवदनायिकावृत्तान्तोऽपि प्रतीयत इति समासोक्तिरलंकारः। **तल्लक्षणमुक्तमेव**।

**अक्षरार्थस्तु** कमपि अयमित्थमिति शब्देन वक्तुमशक्यम्। "यतो वाचो निवर्तन्त" इति श्रुतेः। हृदि हृदये दहरपुण्डरीके, दधाना वहन्ती, दहरोऽस्मिन्नन्तराकाश" इति श्रुतावस्मिन्निति प्रकृतदहरपुण्डरीके हृदये ततोपि दहरस्याल्पस्याकाशशब्दितस्य ध्येयत्वविधानात्। कान्तं मनोहरम्। सच्चिदानन्दात्मकत्वात्। रूपं स्वरूपं यस्य तथोक्तं महान्तं त्रिविधपरिच्छेद-शून्यं "वेदाहमेतं पुरुषं महान्तं विभुमात्मानमिति" श्रुतिः।

**भावभेदा भवन्तीति**. भावा वियदादयः परस्परविलक्षणाः तान् तदुपरि निदधाना दहराकाशान्तर्गतान्विभावयन्ती स ब्रूयाद्यावान्वा अयमाका-शस्तावानेषोऽन्तर्हृदय आकाश उभे यस्मिन् द्यावापृथिवी।

(*राजा सरोमांचविकसितकपोलं चित्तशर्मणो हस्तमास्फालयति*)

**विषयवासना**—किमिहापूर्वार्थसंदर्शनजनितचित्तविस्तारात्मको हर्षोऽपि । दिष्ट्या दिष्ट्या ।

**चित्तशर्मा**—(*स्वगतम्*) हन्त, हर्षेण महताविष्टो वयस्यः । यदि किलैतत्प्रतिनियतवृत्तिरत्र मदोऽपि संनिदधीत, ततोऽतिहि नाम संकटमापद्यते । तदिममन्यतोमुखयितुमेवं ब्रवीमि । (*प्रकाशम्*) वयस्य पार्श्वतो दीयतां दृष्टिः ।

(*राजा श्रुतिमभिनयन् गजमीलनानि करोति*)

**विषयवासना**—पुष्कलोऽयमस्मिन्मदावेशः ।

---

अन्तरेव समाहिते इत्यारभ्य यच्चास्येहास्ति यच्च नास्ति सर्वं तदस्मिन् समाहितमिति श्रुतेः ।

"एष आत्मा अपहतपाप्मेत्यादिप्राकरणिकपदानामभिप्रायविशेषां दहराकाशाभिधानेति वार्थः । इयं सन्निहिता अपहतपाप्मा पुण्यापुण्यकर्म-निर्मूलनक्षमा न जरा, न मृत्युर्नशोको, न सुकृतं, न दुष्कृतं सर्वे पाप्मानोऽतो निवर्तन्त" इत्यत्रैव श्रुतेः ।

सत्यं अवितथः । संकल्पः कामश्च यस्यास्सा स यदि पितृलोककामो भवति संकल्पादेवास्य पितरः समुत्तिष्ठन्ति । तेन पितृलोकेन संपन्नो महीयत इत्यादिना शुद्धसत्वदहरोपासकसंकल्पमात्रादेव परमेश्वरसंकल्पादिवज्जन्म-सहस्रानुबन्धिपित्रादिनानाविधभोग्यवस्तूरस्थानश्रवणात्, जयति सर्वोत्कर्षेण वर्तते । सर्ववेदान्तप्रत्ययन्यायेन नानाशाखाविप्रकीर्णगुणगणोपसंहारा-शक्तावपि दहरविद्यायामानन्दादयः प्रधानस्येति । सूत्रोक्तानन्दादिमुख्य-गुणानुपसंहारेऽपि उमासहायं परमेश्वरं प्रभुमित्यादि श्रुतिश्रुतकतिपयगुणोप-

**चित्तशर्मा**—( *आत्मगतम्* ) आः प्रमादः प्रमादः । कथमेनमितोऽहमभिमतमुद्देशं गमयेयम् ।

( *संकल्पमवलोक्य संकेतयते* )

**संकल्पः**—देव, महदत्र किंचिदक्षिसौभाग्यम् ।

**राजा**—किमिव ।

**संकल्पः**—

रचितरुचिरशोभा ऋग्यजुःसामपुष्पै-
र्द्रुतनिगमरसौघप्रस्फुरद्दिव्यरूपा ।
सदमृतवसुरुद्रादित्यसाम्राज्यदात्री
विलसति मधुविद्या वीतदोषा तदेषा ॥२६॥

---

संहारेण दहरशब्दवाच्यपरमेश्वरोपासनस्य पुराणेषु परमपुरुषार्थसाधनत्वप्रसिद्धेस्तदेतत्सर्वं दहरविद्यानिरुपणे श्रीगुरुचरणैर्निपुणमुपपादितम् तत्रैव द्रष्टव्यम् ।

दहरस्य दहरोऽस्मिन्नन्तराकाश इति दहराकाशशब्दितस्य परमेश्वस्य विद्याउपासना । अत्र दहराकाशः परमेश्वर इति दहरउत्तरेभ्य इति अधिकरणे निर्णीतम् । तस्येमौ पूर्वोत्तरपक्षसंग्रहश्लोकौ । ननु च दहरादन्यध्येयं तदन्तरिहायं वा भवतु । दहरो ध्येयस्तद्ध्यान एव फलान्वयात् । प्रथमपठिताकाराश्रुत्याद्यभूतमसौ भवेत् । दहर इति वा जोवो गौणस्तयोश्च रम्यगुणाः । न खलु दहरस्यान्तः कोऽपि श्रुतोऽग्रिमधर्मभाग्यदुपविमिते तस्मिंद्युभ्वादयः

**चित्तशर्मा**—( *स्मरणमभिनीय* ) श्रूयते हि दिव्यमधुमूर्तेरादित्यस्यान्तराम्नायरसरूपममृतमग्न्यादिमुखेन वस्वादयो देवा दृष्ट्वैवाभिनन्दन्ति तदेव रूपं प्रतिपद्यन्ते, तत एव चद्योन्ति, यस्तावदेतदमृतमेवं वेद स वस्वाद्यन्यतमो भूत्वा तत्साम्राज्यमविनाशित्वमपि पर्येति ।

---

खलु वर्णिताः । तदिह दहरो ध्येयः सत्वीश्वरो बहुभिर्गुणैः व्यवहितपराभ्यर्थी तस्मिन्यदन्तरिति त्वयम् ।"

अयमर्थः । ननु दहरो नोपास्यः किन्तु तदन्यस्तस्मिन्यदन्तरिति वचनात् । अस्तु वा दहर एव ध्येयः । तदन्तः कस्यचिदश्रवणात् तदुपासनस्यैव सर्वेषु लोकेषु कामचारो भवतीत्यादिफलश्रवणाच्च । सर्वथापि तावदुपक्रमश्रुताकाशशब्दरूढ्या दहराकाशो भूताकाशः ।

यद्वा दहरो भवः । ब्रह्मपुरशब्दितशरीरसंबन्धस्य तत्र संभवात् इति तदनुरोधात् । यश्चात्मत्वादि गुणास्तयोः कथं चिद्योज्या इति प्राप्ते यावान्वा अयमाकाशस्तावानेषोऽन्तर्हृदय आकाश इत्युपमानोपमेयभावस्य भूताकाशे बाधात् । जीवेप्यपहतपाप्मत्वादिगुणानां स्वारस्याभावात् । किन्तु दहराकाशः परमात्मा, तत्र द्यावापृथिव्यादिजगत्समाधानादिवाक्यशेषगतहेतूनां संभवात् । आकाशश्रुतिश्चाकाशो ह वै नामेति सर्वाणि ह वा इमानि भूतान्याकाशादेव समुत्पद्यन्त इत्यादावाकाशोऽर्थान्तरत्वादिव्यपदेशादाकाशस्तल्लिंगादित्यधिकरणोदाहरण इव परमेश्वरे वर्तते इति सिद्धान्त इति । सिद्धिरपहतपाप्मत्वादिगुणैः श्लाघनीयेति गौरवादरहेतुमाविष्करोति पदेति । अतिसन्निहितेति यावत् । तदिदमुपपादयति प्रदिति ।

वशीकृते मनस्येषा संगुणब्रह्मशीलनात् ।
तदेवाविर्भवेत्साक्षादपेतोपाधिकल्पनम् ॥

इति कल्पतरूक्तरीत्या सगुणोपासनसमाराधितपरमेश्वरप्रसादे सति तस्यैव सकलगुणप्रहाणेन तस्यैष आत्मा वृणुते तनूं स्वामिति श्रुत्युक्तनिर्गुण-

**राजा—**

( *स्वरूपमहिमफालन्यनुसंधानसौवर्गसुखचिन्तां नाटयन्* )

नेदीयः सुरदीर्घिकातिशिशिरे कल्पद्रुपुष्पोत्करैः
स्फारामोदिनि मारुते विचलति प्रासादशृंगोदरे ।
पुंभावालसभव्यदिव्यमहिला बिम्बाधरास्वादने
तत्तादृक्सुखवैखरी शिव शिव प्राप्येत वै जात्वपि ॥३०॥

( *इति मुह्यति* )

**विषयवासना—**भट्टिनि, मधुविद्यायां भजति व्यामोहमेष नो देवः ।

**अविद्या—**केनैष लंघनीयप्रसरः समये महामोहः ।

**चित्तशर्मा—**( *स्वगतम्* ) हन्त नितान्तमभिभूयते वयस्यो मोहेन । ( *प्रकाशम्* ) देव बुध्यस्व, धीरः खल्वसि ।

( *राजा प्रतिबुध्यते* )

---

अद्वैतात्मविद्याप्रदत्वसंभवादिति भावः । यद्यपीदमुपासनान्तरसाधारणं तथापि छान्दोग्येऽष्टमेऽध्याये सगुणदहरविद्यां विधायाव्यवधानेन प्राजापत्यनिर्गुणदहरविद्याम्नानादित्यभिप्रेत्य पदान्तर इत्युक्तम् । अत एव भाष्ये सगुणदहरविद्यावतारिकायामुक्तम् दिग्देश गुणगतिफलभेदशून्यं हि परमार्थः सदद्वयं ब्रह्म मन्दबुद्धीनामसदिव प्रतिभाति सन्मार्गस्थास्तावद्भवन्तु । ततः शनैः परमार्थ सदपि ग्राहयिष्यामीति मन्यते श्रुतिरिति प्राजापत्यनिर्गुणदहरविद्यावतारिकायामप्युक्तम् ।

अथ य एष संप्रसाद इत्यारभ्य एष आत्मेति होवाचेत्युक्तम् । तत्र कोऽसौ संप्रसादः, कथं वा तस्याभिगमनमित्यादि संप्रसादस्य च देहसंबन्धीनि च

चित्तशर्मा—

स्मृतिमात्रतोऽपि यस्याः कमपि विकारं प्रपद्यते देही ।
आसादिता यदि हि सा मदयति कं नाविवेकीनं नैषा ॥३१॥

राजा—( *श्रुत्वा, सप्रत्यभिज्ञम्* ) नैषा विवेकाद्यभिमता विद्या । अत एव किल 'अविवेकिनमेषा मदयति' इति चित्तशर्मणा सव्याजमभिहितम् ।

( *प्रकाशं, पुरतो विलोक्य* )

संकल्प कैषा महाभागा ।

चित्तशर्मा—( *स्वगतम्* ) हन्त, विवेकादिस्मृतिमात्र एव प्रकृतिमासादितो वयस्यः ।

संकल्पः—

कमपि हृदि दधाना कान्तरूपं महान्तं
तदुपरि निदधाना भावभेदानशेषान् ।
इयमपहतपाप्मा सत्यसंकल्पकामा
जयति दहरविद्या सद्गुणैः श्लाघनीया ॥३२॥

---

रूपाणि ततो यदन्यत्कथं स्वरूपमित्येतेऽर्थाः वक्तव्या इत्युत्तरो ग्रन्थ आरभ्यत इति ।

परमानन्दकन्दलीति । परमानन्दावाप्तिहेतु भूतेत्यर्थः । विद्याखण्डाकारस्वरूपसाक्षात्कारः । भवदक्षीति नायिकाभिप्रायेण । तत्र तल्लोभायेति शेषः । निरूप्येति । गुणानपहाय विद्यामुपलभ्य क्षणनिर्विषयं कृत्वेत्यर्थः ।

एषेति । चित्रगता प्रथमं चित्रेव गता । मनः स्वायत्तं कृतवती । ततः सम्यङ्निरूप्यमाणा निजनिरतिशय सौन्दर्यसारास्वादनसमुदितपरमानन्द-

**राजा**—(*स्वगतसगौरवं सादरं च*) पदमात्रान्तरैव खल्वियमात्मविद्यायाः यदपहतपाप्मत्वादिकतिपयगुणारोप एव विशेषः।

**चित्तशर्मा**—(*जनान्तिकम्*) वयस्य, तदस्या दहरविद्यायाः पदान्तर एव तत्रभवत्या शिवभक्त्या निरतिशयनिजप्रभावेण भवदभिलषितपरमानन्दकन्दली विद्यापि भवदक्षिपथैकगोचरतयानुप्रवेशिता स्यात्। तत्र सावधानं दीयतां दृष्टिः। यतो महामोहादयस्तदपवारणाय संनह्यन्ति।

**राजा**—(*निभृतं निरूप्य*) *विद्यामुपलभ्य स्वगतम्*) हन्त सैवेयं नयनानन्दचन्द्रिका। (*जनान्तिकम्*) वयस्य किं ब्रवीमि। पुरा किल—

एषा चित्रगता मनो हृतवती सौन्दर्यसारोद्भवैः
आनन्दैरतिमोहिनीं किल दशामातन्वती कामपि।
स्यादेतत्करशिल्पमुच्छ्रितमिदं चित्रं किलेत्यास्थितं
तत्तस्याः करशिल्पमल्पितवती सैषातिहृद्याकृतिः ॥२३॥

---

तुन्दिल विस्मृतविषयान्तरतया मुग्धचेत इत्यर्थः। तस्याः शिवभक्तेः। करशिल्पमिति यद्यपि मानसीति प्रागुक्तं तथापि स्मृत्यर्थं तदिति न दोषः। उच्छ्रितचमत्कारशाली। अल्पितवती अल्पकृतवती। अंगैरिति। अंगैः सह सशरीर इति यावत्। अर्चिरादिभिर्हेतुभिः सत्यलोकं नीयतः किमसाविति द्यौरियमिति पृथिवी च गृह्यते। इदमदसोः प्रत्यक्षविप्रकृष्ट परोक्षवाचित्व त इयं वा वास्थान्तरमसौ बृहदित्यादिवत्, ततश्चायमेव स्वर्गलोक इत्युत्प्रेक्षाद्वयमत्यल्पविषयत्वादुपेक्ष्य स्वपक्षमुत्प्रेक्षते हन्तेति। प्रगुणनात् मुहुर्दर्शन-

*(चक्षुषी निमील्य) (संमोहं नाटयन्)*

अङ्गेनैव किमर्चिरादिभिरहं नीतोऽस्मि धातुः पदं
किं वा मत्सुकृतैरसावियमिमौ लोकौ विपर्यासितौ ।
हन्तैतन्मुखचन्द्रमः प्रतिगुणादुत्कूलितेयं व्यधा-
दात्मानन्द सुधासमुद्रलहरी विश्वं किमेकार्णवम् ॥३४॥

अपि च

सुषुप्तिर्वा चित्साक्षिकहृदयविश्रान्तिलसिता
मदो वा मोहो वा घनसुखमयः कोऽप्यभिनवः ।
निरुन्धानो बाह्यं करणपटलं निह्नुतनुजग-
त्प्रकारः कोऽप्यन्तः प्रसरति विकारो मनसि मे ॥३५॥

*( इति स्तम्भं नाटयति )*

---

संबन्धात् उत्कूलिता उल्लंघितवेला, उक्तामेव सुखैकताननतामवस्थाभेदेनो-त्प्रेक्षते । अपि चेति । सुषुप्तिविशनष्टि । चिदिति । चिदेव साक्षिणी यस्याः सा हृदयस्य विश्रान्तिर्विलयः "सुषुप्तिकाले सकले विलीना तमोभिभूतः सुखरूपमेति" सुषुप्तिस्थानः एकीभूतः प्रज्ञानघन एवानन्दमयो ह्यानन्दभुक्" इत्यादिश्रुतेः । तया लसितानि रुन्धानस्तम्भयन् बाह्यमित्युपलक्षणम् । किन्तु ज्ञानमात्रोपरम एवेत्याह निह्नुतेति । निह्नुतः दूरीकृतः जगत्प्रकारः जगद्रूपप्रकाशे यस्य सः, केवलानन्दसान्द्रः कोपि विकार इति भावः । अयं राजा आसां मधुविद्यादीनां प्रभावविलसितैः प्रभावविलासैरिति मात्रं अधिकं पर्युत्सकितः संजातसंभ्रमः प्रमोदभर आनन्दातिशयपरवान् परवशः । प्रावृषि वर्षाकाले नोपद्रुमः कदम्बः, स्तबकैर्गुच्छैः उदग्रः अधिकसंजातकुड्मलैः अङ्गैरवयवैः सत्वविक्रियैः सात्विकमोहस्तम्भादिविकारैः उपासनासु आसक्तिः आसंगस्तन्निबन्धनस्तत्प्रयुक्तः । न प्रत्येति । न विश्वसिति । इह अस्मिन्

**विषयवासना**—( *जनान्तिकम्* ) भट्टिनि, दिष्ट्या फलितस्ते ननु मनोरथः। यदयमासामुपासनानां प्रभावविलसितैरतिमात्र-पर्युत्सुकितः प्रमोदभरविकसितवदनारविन्दश्चिरेण परवानास्ते। पश्य तावत्।

प्रावृषि नीपद्रुम इव परितः स्तबकैरुदग्रकुड्मलितैः।
अंगैरविरलपुलकैराविष्कृतसत्वविक्रियैर्लसति ॥३६॥

**अविद्या**—अपि विषयवासने, देवस्य विकारोऽयमुपासना-सक्तिनिबन्धन इति मनो मम न प्रत्येति। यदिह मद्विषयकप्रणय-गौरवगन्धोऽपि नोपलभ्यते।

**विषयवासना**—किमन्यदित्याह कारणं संभाव्यते।

**राजा**—( *सोन्मादम्* )

मधुलहरीनयनपथे मम मिलिता कापि विद्येति।
दृष्ट्वाभिनन्दिता सा तन्मयमास्ते जगत्समस्तमिदम् ॥३७॥

**अविद्या**—विषयवासने, श्रूतं खलु देवस्य। विद्यानुरागसंमोह-पल्लवितमेतत्।

---

राज्ञि, इह एवंविधे विकारे मधुलहरीति नयनयोर्मधुलहरीवाह्लादकरी नयनोक्तिर्नाट्ये नायिकाभिप्रायेण दृष्ट्वा संदेहेन तर्केण।

प्रमाद इति। देव्या वैमनस्यप्रसंगादिति भावः। विद्यानुरागमूलक-मेवेति मुखान्तरेणापि संवादयामीत्याशयेन प्रागेव विद्यावृत्तान्तपरिज्ञानाय-प्रेषितामसूयां चिन्तासूचनेन प्रदर्शयति हन्तेति।

**विषयवासना**—फलितमिव ते संदेहेन । भवतु । भूयोऽपि विमृशामः ।

**चित्तशर्मा** (*स्वगतम्*) हन्त प्रमादः प्रमादः । तदिदमस्य विद्यारतिपारवश्यविजृम्भितं वयस्यस्य । जल्पितमेवमन्यथयामि । (*प्रकाशम्*) देवि, दिष्ट्या बलवदुपासनासक्तहृदयो देवः । अतः किल 'मधुलहरी' दृष्ट्वाभिनन्दिता इत्यादि मधुविद्यास्वरूपगन्धिनी वागस्य प्रसृता ।

**विषयवासना**—भट्टिनि, विमर्शविषय एवायमस्य विकारः ।

**अविद्या**—कामं विमृश्यताम् । मम तु न संदेहः । विद्यानुरागोन्मादविजृम्भितमेवैतत् । हन्त, बहिः प्रवृत्त्युपलम्भाय प्रहिता किमद्याप्यसूया चिरयति ।

(*ततः प्रविशत्यसूया*)

(*असूया राजानं प्रणम्य देव्याः समीपे निषीदति*)

**देवी**—(*अपवार्य*) अये असूये, काम्योपासनादर्शनप्रकरणे किमपि पर्युत्सुकितः स्तब्ध इव दृश्यते देवः । तत्किमत्र कारणं भवेत् ।

**असूया**—तदिदमेव वक्तुकामाऽगतास्मि ।

**प्रवृत्तिः**—कथमिव ।

---

चिरयति विलम्बते । प्रकरणे अवसरे । अत्र स्तब्धत्वे तदिदं कारणं तादृशः इतराविदिततया विद्याप्रवेशनानुकूलः किमिदमिति अत्याहितमित्यर्थः । तदेवाह अभिमतेति । राज्ञः स्वाभिमुखीकरणप्रवृत्तायां मम तद्विपरीतस्वनाश एव सम्पादितो मद्भाग्येनेति भावः ।

**असूया**—तत्र भवती शिवभक्तिरेतास्वेवोपासनासु विद्यामपि राजमात्रदृश्यामनुप्रवेशितवती" इति। ततस्ततः संचरन्त्या मया श्रुतमभूत्।

**प्रवृत्तिः**—युज्यते हि तादृशीषु तादृशो महान्प्रभावः।

**अविद्या**—(*स्वगतम्*) हन्त, किमिदमापतितम्। अभिमतसिद्धये यतमानायास्तत्प्रतीपमुपनमितं दैवेन। तदितोऽपकृष्य विषयान्तरप्रदर्शनेन देवो विनोदयितव्यः। (*प्रकाशम्*) महाराज, स्थिरप्रणयेन भवता निकाममभिनन्दितास्मि। किमतः परं मम प्रियमस्ति।

**चित्तशर्मा**—(*जनान्तिकम्*) हन्त! तदुक्तिरेव तदनर्थनिदर्शनतया प्रवृत्ता। भवतु, एवमेव।

**अविद्या**—तदग्रतो गच्छामि। सुचिरमिह परिभ्रमणपरिश्रान्तमात्मानमवस्थापयितुं न पारयामि।

(*राजानं चिरं निर्वर्ण्य*)

मामेवं विविधोपभोगललितामुत्सृज्य किं लप्स्यते
भूयः प्रागिव सा दशा परिणमेदात्मावशेषीकृता।
वञ्च्यन्ते करणान्यमूनि तु परं किं तत्र पश्यन्मुखं
साकूतस्मितकेलिलोलनयनं बिम्बाधरं पास्यसि ॥३८॥

---

विषतान्तरेति। षष्ठाङ्के वक्ष्यमाणराजसतामसशिवभक्तिप्रदर्शयिष्यमाणविषयान्तरप्रदर्शनेनेत्यर्थः। एवं राज्ञः स्ववैमुख्येन कुपिता सोत्प्राशमविद्याह महाराजेति। अतः ईदृशवैमुख्यात्। तदुक्तिरेवेतिवेदा। रण्यप्रवेशांगो-

किंच

न वाग्नरूपं न रसो न गन्धो न स्पर्शनं वा सुखहेतुरस्ति ।
भवानहो कं गुणमाकलय्य विद्येति संमुह्यति वा न जाने ॥३९॥

( *इति सकोपा सपरिवारा गन्तुमिच्छति* )

**राजा**—( *सभ्रूभंगम्* ) किमये चित्तशर्मन्, विद्यामधुकृतं ममोन्मादमियदतिभूमिं गतमुपेक्षितवानसि । अतः क्लिकैमकाण्डे दुर्मनायते देवी ।

**चित्तशर्मा**—यदर्थोऽयमारम्भः । अथवा—

मोहस्य किल संवेगः केनापि न निवार्यते ।
कोऽनुरन्धीत वा वेगं नीचप्रवणपाथसाम् ॥४०॥

**राजा**—( *स्वगतम्* ) सम्यगनुशासितोऽस्मि कामादिप्रवणोऽहं "नीचप्रवण" इति वयस्यस्य संबोधनेन ।

**अविद्या**—अलमलममीभिरसारोपचारैः ( *इति सकोपं सपरिवारा निष्क्रामति* )

---

कारोक्तिरेवेत्यर्थः । निदर्शनतया कारणतया । भवत्वेवमिति । अविद्या राज्ञः स्वात्मनि वैमुख्यं विद्यायामाभिमुख्यं च यदभिज्ञाय विप्रलपति तत्तथास्तु को दोष इति भावः ।

अनितरसाधारणगुणग्रामरमणीयराजानं निर्वर्ण्य अत्यन्तविप्रयोगकातरा पुनरविद्या सप्रत्याशं आहेत्याह राजानमिति । एवमिति । आत्मावशेषीकृत आत्मैव शेषो यस्या तादृक्षस्य मयैव मित्रतनयाः संबन्धिनो बान्धवा यस्याः शिल्पमयं पुरी वसुमतीत्याद्युक्तप्रकारेण, न केवलं फलाभावस्तस्यैव किन्तु करणानां विषयालाभेन वैयर्थ्यापत्तिश्चेत्याह वच्यन्त इति । तदेव दिङ्मात्रे-

**उपासना**—हन्त, बलवता विषयान्तरेण विफलीकृतो नः संरंभः । ( *इति समन्दाक्षं तिरोधत्ते* )

( *सहैव ताभिर्विद्यापि* )

**राजा**—सखे ! चित्तशर्मन् भवतु । यथाकथंचिदखिलमपि समये कथमपि समाधीयते । दुर्लभं तु लब्धमेव । तदितःपरमविलम्बितमेव कार्यसिद्धौ व्यापर्तव्यमस्माभिः ।

( *इति निष्क्रान्ताः सर्वे* )

इति पंचमोऽङ्कः

---

णीदाहरति किं तवेति । तदेतत्प्रपंचयति किंचन वागिति । वाक्छन्दः रूपं, "कुवलयदलनीला कापि चाम्पेयगौरी" इति वात्स्यायनाचार्याभिमतरूपं रसः अधरमाधुर्यादिः । गन्धः फुल्लराजीवगन्धः । सुरतपयसि यस्याः सौरभं दिव्यमंगे उत्फुल्लोत्पलगन्धीनीत्युक्तगन्धः । स्पर्शनं कमलमुकुलमृद्वीत्युक्तमृदुस्पर्शः । एवं च शब्दादेः पद्मिन्याद्युक्तं नायिकागुणत्वेन प्रसिद्धस्याभावात् श्रोत्रादिसकलेन्द्रियकैवल्यमिति विस्पष्टमिति भावः ।

एवं सत्यपि विद्याया कथमनुरज्यसीति न जान इत्यर्थः । विद्या मध्विवति । यद्यपि अविद्यातिसंधानं मधुविद्येति स्पष्टोक्तावपि भवति तथापि अत्यन्तविशुद्धहृदयस्य राज्ञोऽनृतमयुक्तकर्तव्यं चाविद्यातिसंधानमिति विद्यामध्विवति व्युत्क्रमनिर्देशः । तथा च विद्यैव मध्विर्वति हृदयम् ।

यदर्थ इति। अत्र चित्तशर्मणः विद्यार्थं एव सर्वोऽयमारम्भ इति हृदयम्। राज्ञोऽपि तथैव बोधः अविद्यायास्तु मधुविद्यार्थं बोध इति ध्येयम्। अथवा केनैष लंघनीयप्रसरः समये महामोह इति देव्युक्तप्रकारेण सर्वोऽयं मोहस्यैव महिमेति केन किंवा कर्तुं शक्यमित्याह अथवेति। संवेगः वेगः। नीचं निम्नप्रदेशः तत्र प्रवणानि प्रवृत्तानि पाथांसि जलानि। व्याजेति। नीचप्रवणेति पाथो विशेषणतया समस्तमिव प्रयुंजानस्येत्यर्थः।

समन्दाक्षं सलज्जम्। भवत्विति। तोषो वा रोषो वा यः कश्चित्प्रकारोऽस्तु किन्नश्छिन्नमिति भावः। प्रत्युत सिद्धं नः समीहित इत्याह दुर्लभंत्विति।

इति पंचमोऽङ्कः

---

## षष्ठोऽङ्कः

( ततः प्रविशति चित्तशर्मा )

**चित्तशर्मा**—अद्य खलु दहरोपासनादिभिः सह विद्यादर्शन-प्रभृतिनिकाममस्वस्थहृदयो महाराजः । तथा हि—

**विश्लेषव्यथया चिरेण हृदयानुस्यूतयार्कशितो**
**निश्वासेन घनोष्मणा मलिनयन्नोष्ठं निसर्गारुणम् ।**
**प्रम्लायन्मुखपंकजो न भजते निर्वेशलेशं मना-**
**गन्तः कोटरलग्नपावक इव श्रीखण्डशाखी चिरात् ॥१॥**

एवमेव महाराजदर्शनप्रभृति सा विद्यापि नितान्तदुःसहेन विरह-संतापेन परिभूयत इति बहुधा श्रूयते । तथाहि ।

---

कविरिदानीं षष्ठमंकं विवक्षुः तदर्थं संक्षेपरूपं मध्यमनीचपात्र-प्रयोज्यतया मिश्रविष्वम्भं दर्शयति तत इति । सहेति । सह शब्दोऽयमुपासना । नाम प्राधान्यार्थः । तद्यौगपद्यार्थोवा । तत्र उपासनानां अप्रधानत्वं दर्शनरूप-क्रियान्वयश्च स्पष्ट एव यौगपद्यमपि उपासनागुणपरित्यागमात्रेण कर्मक्या-दिति कथंचित् बोध्यम् । अस्वस्थहृदयः विक्षिप्तचित्तः विश्लेषव्यथया विद्याविरहप्रयुक्तव्यथया दुःखेन हृदये अनुस्यूतया संततया कर्शितः कृशीकृतः मलिनयन् मलिनं कुर्वन् निर्वेशलेशं भोगलेशं मनाक् ईषत् अपीति शेषः । अन्तः

नैदाघोष्मनिमीलदुत्पलदलच्छायामुषी चक्षुषी
ज्योत्स्नाहीनशरत्सुधाकरसखं वीतप्रसादं मुखम् ।
उद्भूतप्रसवेव लोध्रलतिका धत्ते तनुः पाण्डुता-
मंगैरेवमनंगतन्त्रललितैरास्ते विनिद्रा चिरम् ॥२॥

अपि च—

आलीभिः किल शायिता मरकतस्निग्धे नलिन्या दले
पाथोबिन्दुरिव प्रकामतरला बालाधिकं म्लायति ।

---

कोटरः कोटरस्यान्तः प्रज्वलितानलः श्रीखण्डशाखी चन्दनवृक्षः, नैदाघेति निदाघे धर्मकाले, भवः ऊष्म तेन निमीलत् मुकुलीभूतं । ज्योत्स्नाहीनप्रातःकाले चन्द्रिकारहितउद्भूतप्रसवविकचपुष्पलोध्रलतिका लताविशेषः । अङ्गैरिति अङ्गशब्दस्यावयववाचिनः शरीरवाचिनश्च ग्रहणम् । अनङ्गस्य तन्त्रं व्यापारः तेन लुलितैः क्लिष्टैः ।

चुरुचुरेति । अनलप्रसिक्तसलिलबिन्दु शब्दानुकरणम् । भान्ति चेति । चकारो भिन्नक्रमः मुक्तामणयश्च भान्तीत्यर्थः । असूयाभिहितेति । विद्याविषय एवायमुन्मादो राज्ञ इति पंचमांकोपन्यस्तेत्यर्थः ।

अत्र इतरेतरप्ररोचनविषये यत्नो न विधेय इति फलस्य नियताप्ति-कथनात् । कथमिव समाधेयेति व्यसनेन प्रकृतालोचनसूचनादवमर्शसंधिः । तदुक्तम्—

"क्रोधेनावमृशेद्यत्र व्यसनाद्वा विलोभनात् ।
गर्भनिर्भिन्नबीजार्थः सोऽवमर्श इति स्मृतः ॥

इति । एवं कोषागारमनुप्रविश्येत्यादिना वक्ष्यमाणप्रकारेण एवमिति यथा मन्निर्गमनसमय इत्यर्थः । शाठ्यं गूढं विप्रियकारित्वम् । इहैव मुख्यशाठ्य-निवृत्तौ प्रकृतिकोपनाया इत्यनेन अविद्यादोषप्रख्यापनात्

सिक्ताश्चन्दनबिन्दवश्चुरचुरायन्ते स्तनाभोगयो-
र्मुक्ता भान्ति च सुभ्रुवः स्तवकयोः सक्ता मिलिन्दा इव ॥३॥

अतो न विलम्बसहा दशेयमस्या इति करुणया मैत्रीमुखादभिधाय प्रेषितम्। तदनयोरितरेतरप्ररोचनविषये यत्नो न विधेय एव परं त्वसूयाभिहितवृत्तान्तश्चवणप्रभृति नितान्तपरिकुपिता तावदविद्या कथमिव समाधेया स्यात् (*विचिन्त्य*) हन्त लब्धोऽयमुपायः। तदेवं समाधास्ये। (*अग्रतोऽवलोक्य*) कथमसूया।

---

"तत्रापवादसंफेटौ विद्रवद्रवशक्तयः।
द्युतिः प्रसंगच्छलनं व्यवसायो निरोधनम् ॥
प्ररोचना विचलनमादानं च त्रयोदश ॥"

इत्युक्तेषु विमर्शसंध्यंगेष्वपवादो नामांगम्। तदाहुः "दोष प्रख्यापवादः स्यात्" इति। वैरस्यं स्वस्मिन्निति शेषः। सरलतया मृदुतया अयत्नेनेति यावत्। समीकरिष्यामि वैमत्यमपनेष्यामि। मिश्रविष्कम्भः।

अङ्कं प्रस्तौति तत इति। प्रणयानुबन्धि प्रणयेन गाढस्नेहेन प्रयुक्तं यत् गरिम गौरवं यच्च स्फीतं मयि प्रेक्षणं तद्यातं पृष्टं चेत् किञ्चन्न प्रतिवक्ति किंचिदेव प्रत्युत्तरयति। न सर्वं तदपि परासक्तं मनो विकर्षन् प्रतिविधानं प्रतीकारः अध्यवसितं निश्चितं। भवदिति भवत्याः अनभिमता असंमता या भक्तिः सात्त्विकशिवभक्तिस्तस्याः अनभिमतविधाना विरुद्धकारिणी अभ्याशं समीपमागतं उत्तमर्णमिव धनिनमिव अभ्यागतां अभिमुखमागतां ईक्षते। अतः नीरसानुलपनैर्मुहुर्भाषणै बाह्योपचारैरपि चेतः कृन्तति उन्मूलयतीत्यर्थः। स्वयमीदृशोऽपि प्रत्युत मयि कोपेनारण्यं जिगमिषतीत्याह प्रत्युतेति। अत्र एवंविधे संकटे तेषु तेषु प्रसिद्धेषु। द्विरुक्तिर्न वीप्सायाम् सर्वशिवक्षेत्रेषु तपश्चरणासंभवात्, किन्तु कानिचित् कानिचित् तत्तदद्वयग्राह्याणीति बोध्यम्। परा उत्कृष्टा सात्त्विकीति यावत्। सात्त्विकभक्तेरेव ज्ञानद्वारा कैवल्यहेतुत्वस्य

( *ततः प्रविशत्यसूया* )

**असूया**—प्रेषितास्मि देव्याहमविद्यया चित्तशर्माणमभिधातुम्। तमहं क्व पश्यामि। (*पुरतोऽवलोक्य*) दिष्ट्या सोऽयमित एवाभिवर्तते चित्तशर्मा। यावदेनमुपसर्पामि। (*उपसृत्य*) आर्य देवी समाज्ञापयति। वयस्य, तदेवं देवो मयि विमुखतां प्रतिपद्यमानो विमतासक्त एव। ननु शाठ्मवलम्बते। भवतापि न कश्चिदिहोपायश्चिन्त्यते।

---

पुराणादिप्रसिद्धत्वादत्र चात्रानन्तरमेव राजसतामसभक्त्योर्निरासात्। तयेति विद्ययेत्यर्थः। तत्रापि विद्यासंघटनेऽपि अपिशब्देन राज्ञः समाधाने चित्तशर्मानुकूल्यं प्रागुक्तं समुच्चीयते। ते भक्ती तन्मुखात् भक्तिद्वयरूपात् मुखद्वारात् तत्प्रयत्नं तस्याः सात्त्विकभक्तेः प्रयत्नं विद्यासंघटनानुकूलं यत्नम्। समये भक्तिभ्यां करिष्यमाणहितोपदेशसमये संमुखोकरणायाभिमुखीकरणाय विसृज्यतां प्रेष्यताम्। सविधं समीपं उपसृत्य उपगम्य। समागच्छति समागच्छेत्तर्हि इति शेषः। भवद्विधेयेषु भवदधीनेषु काम्यक्रियोपासनासु काम्याः क्रियाः पौण्डरीकादयः उपासनाः वामदेव्यादयः आदिपदेन शरभबगलादयो गृह्यन्ते। सन्नहनीय बन्धनोय इति। तत् ।तस्मादनुकूलोपायलाभात्। कुत इत्यत आह दुष्परिहरतयेति। अतिभूमिं अत्युत्कर्षं अनन्तरायं निर्विघ्नं। बहुधा अनुनीतापि कोपेन चेत् नाभिमुखी भवति तर्हि प्रतिबन्धकाभावात् सिद्धमिष्टमिति भावः। परावर्त्य निवर्त्य, विसृज मुञ्च। "व्यलीकं व्यलीकंत्वप्रियमनृतमित्यमरः। एवंविधे विप्रिये कथं विस्मर्तव्यमित्याशङ्क्याह। प्रणयिष्विति। पद्मेति। तथा च यथा चंचलत्वात् क्षणमपि न तिष्ठति तथेति भावः। तर्हि स विस्मृत एवेत्याशंक्याह अधर इवेति। रागं शोणिमानं एनं रागं गाहमानेति। वर्तमानसामीप्ये वर्तमानप्रत्ययः।

तथा च यदि प्रसीदसि तर्हि सद्य एव सुखान्यनुभवितुं शङ्क्यत इति भावः। अत्र एकस्यैव रागस्याधरविलोचनहृदयाधारसंबन्धनिबन्धनात्

**चित्तशर्मा**—अये, मद्वचनादुच्यतां देवी।

**असूया**—किमिति।

**चित्तशर्मा**—प्रकृतिकोपनायास्तव निकामकार्कश्येन वैरस्यमुपलभ्य निर्विण्णः स्वयमपि राजा बृहदारण्यपरिसरे कुत्रापि शिवक्षेत्रादिषु तापसैः सह चिरं निवत्स्यामि इति चिन्तयन्नास्ते। त्वं पुनरेवं मामुपालभसे। किमहं करोमि। भवतु। क्रियतामेवम्। त्वया कंचित्कालं सहपरिवारेण कोपागारमनुप्रविश्य स्थीयताम्। राजैव यदि प्रसादनाय कदाचिदागच्छेत् तदापि सरलतया झटिति प्रसादो न करणीयः। तदुपरि सकलमहमेव समीकरिष्यामि इति।

**असूया**—यदाज्ञापयत्यार्यः (*इति निष्क्रान्ता*)

**चित्तशर्मा**—यावदहमपि विजने शृंगारवने मदनपर्याकुलस्य सवयसो महाराजस्य परिसरवर्ती भवामि। (*इति निष्क्रान्तः*)

*प्रवेशकः*

---

पर्यायालंकारः। स च रागशब्दस्य शोणिमानुरागरूपानेकार्थपरतया श्लेषोत्थापित इति तयोरंगांगीभावेन संकरः।

यद्यप्यत्र नैकस्यानेकाधारसंबन्धः अधरलोचनयो रागो रक्तिमा हृदये तु रागोऽभिलाष इति भेदात्। तथापि रक्तिमाभिलाषयो रागपदोपात्तयोः श्लेषेणाभेदाध्यवसनात् एकस्यानेकाधारसंबन्धो बोध्यः। एतेन एनमित्यन्वादेशो न युक्तः, तस्य एकस्यैव क्रियान्वयित्वेनोपात्तस्य एकक्रियान्तरप्रतिपादने विधानादित्यपि निरस्तम्।

"पर्यायो यदि पर्याये नैकस्यानेकसंश्रय" इति पर्यायलक्षणम्। आयासैरायासहेतुभिः। स इति कोपपराङ्मुखतया परोक्षनिर्देशः विषये। वस्तुनि

(ततः प्रविशति क्रोधागारे सपरिवारा देवी)

**देवी**—सखि विषयवासने, कियदनुसृतोऽपि देवो मयि विरसहृदय एव । तथाहि—

यातं तत्प्रणयानुबन्धि गरिमस्फीतं मयि प्रेक्षणं
पृष्टं चेत्प्रतिवक्ति किंचन परासक्तं विकर्षन्मनः ।
अभ्याशागतमुत्तमर्णमिवमामभ्यागतामीक्षते
चेतः कृन्तति नीरसानुलपनैर्बाह्योपचारैरपि ॥४॥

प्रत्युत 'तापसाधिष्ठितेष्वरण्येषु तपश्चरामि' इति वदति । किमत्र कर्तव्यम् ।

---

मनाक् ईषत् । शाठ्ये विप्रियकारित्वे । विषसंपृक्ते विषलेशदूषिते । अत्रायासैरित्यत्र हेतुहेतुमतोरैक्यं हेतुं केचित् प्रचक्षत इत्युक्तलक्षणो हेत्वलंकारः । (७ श्लो) अनेन संफेटो शेषभाषणमित्युक्तो संफेटो नामाङ्गम् । तं राजानम् । सभ्रूकुटी भ्रूकौटिल्येन सह यथा तथा अनेन राज्ञस्तिरस्कारो दर्शित इति "द्रवो गुरुतिरस्कृतिः" इत्युक्तं द्रवो नामांगम् । साकूतं साभिप्रायम् । निर्विद्यते खिद्यते । अवधीरयति तिरस्करोति तत्तस्मात् ।

यस्य माता गृहे नास्ति भार्याचाप्रियवादिनी ।
अरण्यं तेन गन्तव्यं यथारण्यं तथा गृहम् ॥

इति न्यायादिति भावः । संज्ञाप्य गृहीतसंकेतां कृत्वा तदनालक्षिताः राज्ञा नालोकिताः, इत आयात्विति शेषः ।

सत्यमिति । आविद्यकस्य सांसारिकवृत्तिमुखाभासस्याबाध्यत्वरूपसत्यत्वाभावादिति भावः । प्रत्यूहः विघ्नः । प्रकृतस्य विद्यापरिणयरूपस्य । सांप्रतं संप्रति असौ अविद्यास्वरूपावारकत्वात् उच्चैस्तरस्य अत्युत्तमस्य श्रेयसः त्यक्तव्या । अत इति शेषः । रुजेव रोग इव । स्वयमिति अस्माभिर्यदनुष्ठेय-

**विषयवासना**—देवि, मा भैषीः। यतश्चित्तशर्माऽयमस्माकमनुकूलस्तिष्ठति।

**देवी**—(*विचिन्त्य*) 'तेषु तेषु सिद्धक्षेत्रेषु तपश्चरणाय गते राजनि परा शिवभक्तिरुपेत्य कदाचित् तया सह संघट्टनाय यत्नं करिष्यति' इति चिन्तातरलितं मम हृदयम्।

**विषयवासना**—सखि, तत्रापि किंचित्प्रतिविधानमध्यवसितमस्ति।

**देवी**—कथमिव।

---

मिति न्यायादिति भावः। अनेन 'विरोधशमनात् विरोधशमनं शक्तिः' इत्युक्तं शक्तिर्नामांगम् निबद्धम्। तदेतदिति। प्रकृतकार्यानुकूलपूर्वापरव्यापारकदम्बकमुच्यते। प्रकरणमवसरः, आशयमभिप्रायम्, समधिगम्येत प्राप्येत पटीयसि समर्थतरे। भवदभ्युदये तव श्रेयसि, एकताने अनन्यव्यापारे। अनेन चित्तशर्मणा विद्यापरिणयानुकूलस्वशक्त्याविष्करणाद्व्यवसायाख्यमंगमुक्तम्। तदाहुः—

"व्यवसायः स्वशक्त्युक्तिः" आदिश्य इति। । नियुज्य इत्यर्थः। केष्वपि दुष्करेष्वपि कार्येषु विषये यद्यादिश्येत्तर्हि कुर्यामिव तर्हि मेरुमन्दरशिखाग्रन्थनमपि कुर्याः। किमित्याशंक्य कुर्यामित्यनुषङ्गेणाह **मन्दरस्येत्यादि** शिखया अग्रेण ग्रन्थनं बन्धनमपि कुर्यामेव। पाणितले सिकतां निघृष्य निष्पिष्य सिकताभ्यः तैलं विष्पन्दयेयं क्षारयेयम्। यद्वा कार्येष्वितिनिर्धारणे सप्तमी। तथा च कार्येषु मध्ये यदतिदुष्करं मेरुमन्दरशिखाग्रन्थनं तदपि कुर्यामेव हीति एकवाक्यतया योज्यम्। प्रथमपक्षे आदिश्य इत्यारभ्य कुर्यामेव हीत्यन्तमेकं वाक्यम्। तर्हि मेरुमन्दरशिखाग्रन्थनाद्यपि कुर्याः, किमित्याशंकायां तदपि कुर्यामेवेति वाक्यान्तरमिति द्रष्टव्यम्। पक्षद्वयेऽपि तैलमित्यादि

**विषयवासना—**

भवदनभिमताया देवि तस्यास्तु भक्ते-
रनभिमतविधाना तामसी राजसी च ।
प्रचरति शिव भक्तिस्ते ममाप्यन्तरंगे
झटिति विघटयिष्ये तन्मुखात्तत्प्रयत्नम् ॥५॥

तदेनयोः समुत्साहनाय समये राजसंमुखीकरणाय च सद्य एव विसृज्यतामसूया ।

**देवी—**सम्यगुचितमेव चिन्तितम् । असूये, सपदि वेदारण्य-मधिगम्य तत्र विनयेन तामसराजशिवभक्त्योः सविधमुपसृत्य मद्वचनाद्ब्रूहि 'यदि खलु तत्र जीवराजः समागच्छति तमभिमुखी-कृत्य भवद्विधेयेषु काम्यक्रियोपासनादिष्वेव संनहनीयः' इति ।

**असूया—**यदादिशति भट्टिनी ।

---

वाक्यान्तरमेव विष्यन्दयेयमिति तत्र पृथगाख्यातश्रवणात् । एवंविधस्य ममाघटितनायिकासंघटनं विघटितयोर्नायिकानायकयोः सामरस्यसंपादनं चेषत्करमिति भावः । शिवभक्त्युत्साहरूपबीजोपन्यासेन प्रकृतमुपक्षिपति । स्मरणमिति । सरलया ऋज्वा शिवभक्त्या कन्यारत्नं श्रेष्ठाकन्या, "रत्नं श्रेष्ठे मणावपीति निघण्टुः । विलिल्ये तिरोहितम् । स्मृताभिनयेऽनुवर्तमानेऽपि मध्ये नायिकाप्रसंगात् । तत्प्रयुक्तमाश्चर्यं सद्यस्तनमनुवदति किन्त्विति । एष इति स्वप्नविशेषापेक्षया पुंलिगम् । तथा च भक्तिदर्शितं य एष स्वप्नः किमित्यन्वयः । तत्परिणये तथापीति शेषः । एवं तात्कालिकं विस्मयं प्रदर्श्य पुनः स्मरणाभिनयमनुसंधत्ते । अपि चेति । तदाकृतिमता आकृतिरिह उपनिषदक्षरविन्यास इति विद्यापरत्वे हृदयम् । भूयः पुनर्दहरविद्यादर्शनसमये आसादिता प्रापिता । यदा तदा चित्तम् ।

**देवी**—विषयवासने, तदितः परमानुकूल्यमुपागत एव महाराजः ।

*(ततः प्रविशति चित्तशर्मणा सह राजा)*

**राजा**—सखे चित्तशर्मन्, अपि नाम मया प्रसादितापि देवी मामवधीर्य कोपागार एव निवसेत् ।

**चित्तशर्मा**—कः संदेहः । दुष्परिहारतया तथातिभूमि गमितो हि मया तदीयकोपः । यथा स्वामिकार्यमनन्तरायमेव संपद्येत ।

**राजा**—भवतु । यावदेनमुपसर्पामि । *(उपसर्पति)*

*(देवी राजानमवलोक्य मुखं परावर्त्य तिष्ठति)*

**राजा**—

विसृज सुतनु मौनं विस्मरेदं व्यलीकं
प्रणयिषु ननु कोपः पद्मपत्रोदबिन्दुः ।
अधर इव किमेतद्रागमभ्येति चक्षु-
र्गमय हृदयमेनं गाहमाना सुखानि ॥६॥

---

अत्र निःशेषमित्यत्र सहेन्द्रियैरिति साहित्योक्त्या सहोक्तिः । प्राणा एवेत्यत्र परिसंख्यालंकारश्च । तयोः संसृष्टिः । परिसङ्ख्या निषिध्यैकं एकस्मिन् वस्तुयत्रंणम् । इति तयोर्लक्षणे । तिलतण्डुलन्यायेन स्फुटालङ्कार-भेदमेलनं संसृष्ठिः । नीरक्षीरन्यायेनास्फुट भेदालंकारमेलनं संकरः । इत्याहुः । तदेनां विद्यां समवकर्णिता श्रुता । तत्रभवत्या पूज्यया भक्त्येति शेषः । **मुदितेति** । मुदिता हर्ष इति योगवाचस्पतिः । इह वेदारण्ये कार्यस्य

**देवी**—सखि विषयवासने,

किमेतैरायासैर्व्रजतु स यथेष्टं मम किल
स्वभावोऽयं कीदृक्प्रणयपदभूतेऽपि विषये ।
मनाग्दृष्टे शाठ्ये मधुनि विषसंपृक्त इव मे
क्षणध्वस्तप्रेम प्रसरति पुनर्जातु न मनः ॥७॥

**राजा**—हन्त कियदनुनीतापि प्रेयसी न प्रकृतिमापद्यते ।

(*देवी तमनालोकयत्येव सभ्रूकुटिं चित्तशर्माणं पश्यति*)

**चित्तशर्मा**—(*साकूतम्।*) देवि प्रसीद प्रसीद । भवदधीन एव राजा । ननु चिराय निर्विद्यते ।

**राजा**—हन्त, कियदनुसृतापि नितान्तविमुखी मामवधीरयत्येव । तदहमितः परमरण्येषु कुहचिदाश्रमेषु तापसैः सह निवृत्युन्मुख एव तपश्चरेयम् ।

(*इति सकोपाटोपं परावृत्य गच्छति*)

---

परिणयस्य परभागं ज्ञानकाण्ड इति हृदयम्। अत्र लोके तामसी राजसी सात्विकीति भक्तिस्त्रिविधा । तत्र सात्विकभक्तिरेव मुक्त्युपयोगिनी । इतरे तु स्वर्गनरकप्रापिण्याविति नारदीयादिषु प्रसिद्धम् ।

"ऊर्ध्वं गच्छन्ति सत्वस्था अधो गच्छन्ति तामसाः" इत्यन्यत्रापि । ओजायेते ओजस् शब्दात् क्यङि ओजसोऽप्सरसोः नित्यं सलोपः । इह लोके । को नामेति । प्रायेण सर्वेऽपि भक्तिद्वयग्रस्ता एवेति भावः । सात्विकभक्तौ सत्यां कथमेवमित्यत आह, स तावदिति । अस्तु सात्विकभक्तिस्तथापि स किं विहितानि कुर्यात्त्वा यदि कुर्यात्तर्हि क्रियमाणदर्शपूर्णमासाग्निहोत्रादि फलेषु

*(चित्तशर्मा देवीं संज्ञाप्य राजानमनुसरति)*

**देवी**—अयि प्रवृत्ते ! वयमपि तदनालक्षिता एव राजानमनुसरामः ।

**प्रवृत्तिः**—उचितमाह देवी ।

**राजा**—कः कोऽत्र भोः ।

*(प्रविश्य)*

**दौवारिकः**—अयमस्मि ।

**राजा**—संकल्प, वेदारण्यमार्गमादेशय ।

**संकल्पः**—इत इतो देवः ।

*(सर्वे वेदारण्यगमनं नाटयन्ति)*

**राजा**—*(जनान्तिकम्)* ।

सत्यं नैव सुखं कदाचिदनया जायेत न प्रत्युत
प्रत्यूहः प्रकृतस्य सांप्रतमसावुच्चैस्तरश्रेयसः ।
त्यक्तव्या महतो रुजेव बहुना यत्नेन दैवादसा-
वस्मानुत्सृजति स्वयं यदि ननु ध्वस्तानि दुःखानि नः ॥८॥

---

स्वर्गपशुपुत्रादिषु कथञ्चित्कामनामुत्पाद्य तदभावेऽवश्यंभावि सूक्तवाकादिफलेषु आयुरादिष्ववश्यंभावि कामनाद्वारा विधेयीकुर्वहे, यदि न कुर्यात्तर्हि नित्यनैमित्तिककर्मपरित्यजन् प्रत्यवोधात् अकुर्वन् विहितं कर्म निन्दितं च समाचरन् 'नरो निरयगामी स्यात्' इत्यादि धर्मशास्त्रादि घट्टार्थः । सूक्तवाक प्रतिपाद्यायुरादिफलकामनावश्यंभाविनोति पूर्वसूत्रे स्थितम् । तथा च

**चित्तशर्मा**—वयस्य, तदेतत्प्रकरणं च भवदाश्रयं च विज्ञानतयैव मया कृतमेवं संविधानम् ।

**राजा**—सखे चित्तशर्मन्, अपि नाम हृदयानन्दचन्द्रिकप्रियतमा मयात्र समधिगम्येत ।

**चित्तशर्मा**—कः संदेहः । अघटितघटनापटीयसि भवदभ्युदयैकताने मयि तव सचिवे जाग्रति किमिव नाधिगम्येत । शृणु तावत् ।

संदिश्ये यदि वत्सलेन भवता कार्येषु केष्वप्यहं
कुर्यामेव हि मन्दरस्य शिखया मेरोः शिखाग्रन्थनम् ।
तैलं पाणितले निघृष्य सिकता निष्यन्दयेयं त्वणा
त्कान्तासंघटनं मिथः सरसतासंपादनं मे कियत् ॥९॥

**राजा**—सखे त्वयि सर्वमुपपद्यत एव । (*स्मरणमभिनीय*)

निर्व्याजोपनमद्दयासरलया भक्त्या किमप्यद्भुतं
कन्यारत्नमदर्शि तत्तडिदिवाकाशे विलिल्ये पुनः ।
किं नु स्वप्नविशेष एष मनसः कश्चिद्विकारोऽथवा
तत्वं तस्य न वेद्मि तत्परिणये पुष्णाति तृष्णां मनः ॥१०॥

---

निष्कामकर्मानुष्ठानासंभवात् सात्विकभक्तिः शशशृंगायत इति भावः। एवं तन्मतमुपन्यस्य तत्परिहारोपायं स्वयं दर्शयति अत इत्यादिना। नह्येतां बध्नीतां इह काम्यकर्मसु । सुखरुची: सुखप्रीती: । पर्यायतः क्रमेण प्रलोभनादिति यावत् । कर्मेति । कर्माण्युपासनां च उक्तविधया बन्धहेतुत्वात्

अपि च—

चित्रेणापहृतं तदाकृतिमता चित्तं ममार्धं सखे
भूयः सा मम भाग्यतो नयनयोः पन्थानमासादिता ।
निःशेषं तदपाहरद्विधुमुखी सर्वैः सहैवेन्द्रियैः
प्राणा एव लुठन्ति केवलमिमे गात्रेषु मे संदिताः ॥११॥

सखे, चित्तशर्मन्, अपि नाम तदेनामधिकृत्य समवकर्णिता कापि वार्ता ।

**चित्तशर्मा**—अथ किम् ?

**राजा**—वयस्य, कथय कथय ।

---

जालकानि वागुरा तत्र अतिगहने दुर्मोचे एतत् नहनं पराणुद्यतां निषिद्धयताम् । यावद्विद्यापरिणयमिति शेषः । तत्र हेतुमाह **देवस्येति** । परमेश्वरस्येत्यर्थः । श्रुतिस्मृती ममैवाज्ञो इति स्मरणादिति भावः । मनाक् ईषदपीति शेषः ।

ननु कर्माणि कर्तव्यानीतिचेत् कथं न तद्विधेयता उक्तविधया नान्तरीयकसूक्तवाकादिप्रकाश्यायुरादिफलकामनाया दुरपह्नवत्वादित्याशंक्याह **तदर्थमिति** । विलासेषु बाह्यव्यापारेषु आलोकनभाषणादिषु ईदृशस्यापि भोगवैमुख्ये हेतुः । श्रोत्रिय इति दुराचारपराङ्मुख इत्यर्थः । तथा च "चतुर्णां पुरुषार्थानां दाता देवश्चतुर्भुजः" इत्यादाविव साभिप्रायविशेष्यनिर्देशात् परिकरांकुरालंकारः ।" साभिप्राये विशेष्ये तु भवेत्परिकरांकुरः ।" इति तल्लक्षणम् । चरितैः कर्मोपासनारूपैः तृतीयया करणत्वम् । कर्मसाध्यफलेष्विति यावत् । इदं वाक्यमंजलिभिः पातुमित्यादाविव सामान्ये नपुंसकम् ।

**चित्तशर्मा**—अद्य किल तत्र भवत्या प्रहिता मुदिता मामुपेत्य तद्वचनादभिहितवती। यथा किल"—अये चित्तशर्मन् जीवराजस्य विद्याभिलाषजनितविरहसन्तापातिशयः सत्संगेन यथावदिहाभिमतः। श्रुत एव खलु भवता मैत्रीमुखेन जीवराजविरहखेदपरिभवो विद्याया अपि। तदेवमुभयानुरागे परां कोटिमधिरोहति कार्यस्य विलम्बन-मनुचितमेव। अतः कथमपि जीवराजो वेदारण्यपरभागमचिरेणैव प्रापणीयः। अहमपि तदागमनसमनन्तरमेव कार्यस्य सिद्धये कृत-संधाना भवामि। अन्यदपि किंचिदिह कार्यमावश्यकमभिधीयते। तदवहितेन श्रोतव्यम्। अत्र तावदस्मदनभिमताचारे तामसी राजसी च शिवभक्ती निकाममोजायेते। तयोस्तावदेवं हृदयम् आवयोरिह जाग्रत्योरविद्याया नियोगमतिवर्तेत को नाम, स तावदत्र यदि विधिविहितान्यनुरुन्धीत तर्हि कामनामनुप्रवेश्य तमविद्याविधेयं कुर्वहे, यदि खलु नानुरुन्धीत तर्हि तत्प्रत्यवाय एव तमभिहत्य मोहादिवशे कुर्यात्। ईश्वरोऽपि किमत्र कुर्वीत।" इति।

---

अत्रेदं बोध्यम्।

यस्य प्रारब्धं यज्ञादिकर्मश्रवणादिप्रतिबन्धकमस्ति तस्य निष्कामकर्मा-नुष्ठानासंभवेन श्रवणादिविरहेण विद्यानुदयेऽपि तद्रहितस्य पुंसस्तथाविध कर्मानुष्ठानासंभवेन श्रवणादिसंभवादिहैव जन्मनि विद्योदयः संभवति सूक्तवाकादिफलायुरादीनां च प्रारब्धानां विद्यायोनिशरीर एव भोगोपपत्तेः।

अनारब्धानांच कथंचिद्विद्योदये तदधिगम उत्तरपूर्वयोरश्लेषविनाशौ तद्दर्शनादिति न्यायेन विद्याशालिपुरुषाश्लेषेण तस्य पुत्रादायमुपयन्ति सुहृदः साधुकृत्या द्विषन्त पापकृत्यामिति श्रुत्युक्तसुहृत्संगमोपपत्तेः ईश्वरानुगृहीतस्य पुरुषविशेषस्य प्रतिबन्धकाभावे सत्यत्रैव जन्मनि सात्विकभक्त्या निष्काम-कर्मानुष्ठाने श्रवणादि भवतीति इहैव विद्योदये न किंचित् बाधकमिति।

अतः

नद्यैतामिह ते नृपं सुखरुचीरुत्पाद्य पर्यायतः
कर्मोपासनजालकेऽतिगहने नैतत्पराणुद्यताम् ।
देवस्यैव हि शासनानि विधयो नामाविलङ्घ्या हि ते
भक्त्योः किं तु तयोर्मनागभिमतावाप्तिर्न संपाद्यताम् ॥१२॥

---

अष्टांगयोगमिति । यमनियमासनप्राणायामप्रत्याहारधारणाध्यान-समाधिरूपाष्टांगयुक्तो योग इति, योगश्चित्तवृत्तिनिरोध इति च योगशास्त्रे प्रसिद्धम् ।

पूर्वाभाग इति । कर्मकाण्ड इति हृदयम् । यथायोगं यथासंभवं, अनुरोद्धव्या अनुसर्तव्या । अनुकम्पते दधते । निरुपाधि निर्व्याजम् । दयिता-विषयसंकथने रसः अभिलाषः । तत्राभिनिवेशः आग्रहः तद्वशात्तदधीनत्वा-द्विप्रकर्षः व्यवधानम् । शिक्षापाणिनिनारदादिकृता । कल्पः बोधायनापस्त-म्बादिनिबन्धाः । आदिशब्देन व्याकरणनिरुक्तज्योतिषछन्दोविचितयः गृह्यन्ते ।

तदिति । सांगप्रधानैक्यादंगानां प्रधानैकदेशत्वं बोध्यम् । गान्धर्वविद्या संगीतशास्त्रम् । तस्याः विशेषणं नादब्रह्मविनोदिनीति । नादः घटनादवत् ध्वन्यात्मकः । निषादर्षभगान्धार षड्जमध्यमधैवतपंचमरूपस्वप्रस्वरसमुदायः । 'रंजकस्वरसंदर्भो राग इत्यभिधीयते' इत्युक्तलक्षणं स एव ब्रह्मसुखहेतुत्वात् । वेदो वा गान्धर्ववेद इति प्रसिद्धेः विद्या धनुर्वेदः । पारदः पादरसः, तस्य गुणाः राजयक्ष्मादिमहारोगनिवर्तकत्वादयः । तेषां प्रख्यापयित्री बोधयित्री ।

येति । विद्येत्यनुषज्यते । आयुर्वेद इत्यर्थः । एतेषां च वेदत्वं उत्कृष्टत्वंच ।

तदर्थमेवं करोतु वयस्यः । यथा—

विलासेष्वासक्तिं विदधदपि तद्भोगविमुखो
निरुद्धः कामिन्या निपुणरसिकः श्रोत्रिय इव ।
भजत्वत्रासक्तिं फलमनभिसंधाय चरितै-
रिदं यावद्विद्याधिगममुपदेशोऽस्य भवतु ॥१३॥

---

आयुर्वेदो धनुर्वेदो गान्धर्वश्चेत्यनुक्रमात् । इति ।
गीतिज्ञो यदि योगेन नाप्नोति परमां गतिम् ।
रुद्रस्यानुचरो भूत्वा तेनैव सह मोदते ॥
द्वाविमौ पुरुषौ लोके सूर्यमण्डलभेदिनौ ।
परिव्राड् योगयुक्तश्च रणे चाभिमुखो हतः ॥
संसारस्य परं पारं दत्तेऽसौ पारदः स्मृतः ।
पारदो गदितो यस्मात् परार्थं साधकोत्तमैः ॥
सूतोयं मत्समो देवि मम प्रत्यंगसंभवः ।
मम देहरसो यस्माद्रसस्तेनायमुच्यते ॥

इत्यादि शास्त्रैर्महाफलत्वप्रतिपादनादवगन्तव्यम् ।

**विद्याशेषेति** । विद्याः समस्तास्तव देवि भेदा इत्यभियुक्तवचनादिति भावः । उक्तं विद्याशेषत्वं स्थालीपुलाकन्यायेन निदर्शयति बहुनेत्यादिना । वैषयिकं विषयान्नायिकास्वरूपादागतं सुखं संभोगानन्दतत्परिपोषणं च तदुपस्करणम् । तदेकनिरतः तत्तात्पर्यवान् । सहस्रभगदर्शनान्मोक्षप्राप्ति रित्यादि ।

पद्मिनीहस्तिन्यादिनायिकाजातिविशेषबन्धचुम्बनादि भेदप्रतिपादकं शास्त्रं वात्स्यायनतन्त्रम् । तस्या अपि वात्स्यायनादीनां ब्रह्मण्येव समन्वय इति प्रसिद्धम् । कैमुतिकन्यायेनेतरविद्यानां ब्रह्मणि समन्वयप्रदर्शकं समन्वय-मुपपादयति तदीयेति । वैषयिकानन्दसंबन्धीत्यर्थः । परिणतौ अवसाने यद्वैरस्यं तेनोपनमन्ति समागता जुगुप्सा तदाहितः निर्वेदातिशयः वैराग्या-

अतो यावदहं निवृत्या सममीश्वरस्य दौवारिकमष्टांगयोगं प्रहिणोमि तावदिह वेदारण्यपूर्वभाग एव महेश्वरशासनरूपा विधयो यथायोगमनुरोद्धव्याः" इति ।

**राजा**—हन्त, कियदनुकम्पते निरुपाधिवत्सला भगवती शिवभक्तिरस्माासु । (*पुरोऽवलोक्य*) हन्त दयिताविषयकसंकथनरसाभिनिवेशवशादनवगतविप्रकर्षोऽयमस्माभिरधिगत एव वेदारण्यभागः । यदत्र शिक्षाकल्पादिनामानो विचित्रगहनरमणीयास्तदेकदेशभेदा दृश्यन्ते । (*स्वगतम्*) उपपन्नमेवैतत् । सकुतुकमभितो विलोकयन् । अत्र किल

नादब्रह्मविनोदिनी विजयते गान्धर्वविद्येति या<br>
या विद्या विजयश्रियो जननभूश्चापेपुसंबन्धिनी<br>
जीवानन्दनिदानपारदगुणप्रख्यापयित्री च या<br>
विद्याशेषतया विभाति सकलं भक्तिप्रभावान्मम ॥१४॥

---

तिशयः । तेन फलिता परमार्थसुखे ब्रह्मणि जिज्ञासा तन्मुखेन तद्वारेण । गाढेति । दृढबद्धजटाकलापनिकटघटितकुलाय कुहरकृतविहरणशकुनि शतमृदुकूजितकोलाहलैरपि विक्षेपपरिहिता एव समापतन्तीति संबन्धः । देवे परमेश्वरे क्वापि अनिर्वचनीयमहिमनि निविष्टं विहितं, अत एव तुष्टमनसः धर्माणां विशुद्धत्वं च शुद्धसत्वप्रयुक्तत्वम् । मुख्येति । ब्राह्मणत्वादिविशेषणापेक्षयावश्यकत्वेन 'परीक्ष्य लोकान् कर्मचितान् ब्राह्मणो निर्वेदमायान्नास्त्यकृतः कृतेन' शान्तोदान्त उपरतस्तितिक्षुः समाहितो भूत्वा' "तस्मान्मुमुक्षुरपुनर्भवाय इत्यादिश्रुतिषु नित्यानित्यवस्तुविवेकेहामुत्रार्थफलभोगविराग शमदमादि संपन्मुमुक्षुत्वरूपसाधनचतुष्टयस्य प्रतिपादनात्तस्यैव चाथातो ब्रह्मजिज्ञासेति

**चित्तशर्मा**—किं बहुना । वैषयिकपरिपोषणैकनिरतो वात्स्यायनतन्त्रसिद्धान्तोऽपि तदीयपरिणतिवैरस्योपनमदतिजुगुप्साहितनिर्वेदातिशयफलितपरमार्थसुखस्वरूपजिज्ञासामुखेन विद्याशेषतयैवाध्यवसीयते ।

**राजा**—(*पुरोऽवलोक्य*)

**गाढोद्बद्धजटासनीडनिबिडव्यानद्धनीडोदर-**
**क्रीडन्नीडजकाकलीकलकलाटोपैरविक्षेपिणः ।**
**देवे क्वापि निविष्टतुष्टमनसः शिष्टा इमे तापसाः**
**संघीभूय समापतन्ति क इमे धर्मा विशुद्धा इव ॥१५॥**

अये विमृश्यताम् । इमे के इति ।

**संकल्पः**—देव संनिहितमिह भवन्तमवकर्ण्य पुण्याभिराशीभिर्योजयितुकामा वेदारण्यवासिनस्तापासः संप्राप्ताः ।

**चित्तशर्मा**—(*किञ्चिदिव राजानमुपसृत्य, जनान्तिकम्*) वयस्य मुख्याधिकारतया साधनचतुष्टयत्वेनाभिमता विवेकादयो मोहादिभिरनभिभूततया भवदुपनयनाय भगवत्या तापसवेषेण प्रहिताः ।

---

सूत्रेऽथशब्दार्थ विवरणपरभाष्यादौ अथशब्दो नाधिकाराद्यर्थः किन्तु उक्तविधसाधनचतुष्टयसंपत्यानन्तर्यार्थः इत्युक्तत्वान्मुख्यत्वं बोध्यम् । भगवत्या शिवभक्त्या । वयस्य तर्हि अभ्युपगच्छामः अंगीकुर्मः । उपगच्छति विवेकादिममीपं गच्छति ।

अधिगम्येत्यनन्तरं तस्येति शेषः । निर्वहणाय संपादनाय । परिचितपूर्वः पूर्वं परिचितः भूतपूर्व इति यावत् । सर्वं कायमिति शेषः । संविदधीत सम्यक्कुर्यात् । विद्युदिति अत्यन्तक्षणिकमिति यावत् । मृत्योरिति । कालात्मकस्य परमेश्वरस्य इत्यर्थः । अतोऽन्यदार्तम् ।

**राजा**—*(सपरितोषम्)* वयस्य, तर्हि वयमभ्युपगच्छामः। *(इत्युपगच्छति)*

*(ततः प्रविशन्ति विवेकादयस्तापसाः)*

**तापसाः**—आदिष्टा वयमत्र भवत्या शिवभक्त्या जीवराजमधिगम्य विद्यापरिणयेऽधिकारनिर्वहणाय तददृष्टपूर्वोऽयमस्माभिरिह कथं विधेयीकरणीयः। अथवा तदीयनर्मसचिवश्चित्तशर्मा परिचितपूर्वः, स एव नः सर्वमपि संविदधीत।

*(राजा सविनयादरमुपसृत्य सप्रश्रयांजलिश्चित्तशर्मणा सहानमति)*

**तापसाः**—राजन्! महत्तरेण श्रेयसा युज्यस्व।

---

यस्य ब्रह्म च क्षत्रं च उभे भवत ओदनः।
मृत्युर्यस्योपसेचनं क इत्था वेद यत्र सः॥
अहरहर्नयमानो गामश्वं पुरुषं जगत्।
वैवस्वतो न तृप्यति सुराया इव दुर्मतिः॥
मघवन् मर्त्यं वा इदं शरीरमात्त मृत्युना।
प्रमाणं नैव जन्तूनामुत्तरक्षणजीवने॥

इति च श्रवणादिति भावः।

सत्येति। तथा च कालत्रयाबाध्यत्वेन ब्रह्मैवैकं नित्यं तदन्यत् सर्वं मिथ्याभूतमनित्यमिति नित्यानित्यवस्तुपरिच्छेदरूपोऽयं विवेक इत्युक्तं भवति।

अयमिति। बुद्धिसन्निहित श्रोतव्यो मन्तव्यो निदिध्यासितव्य इति श्रुत्युक्तश्रवणाद्युपायनिर्देशः। अत्र चकारेण नित्यानित्यवस्तु विवेकोपायज्ञाने समुच्चीयेते। प्रज्ञानं प्रकृष्टं ज्ञानं, तस्य संशीलनादभ्यासात् आलभेतेति

**चित्तशर्मा**—(*पुरतो निर्दिश्य*)

विद्युत्ताण्डवडम्बरं जगदिदं मृत्योर्मुखान्तर्गतं
सत्यज्ञानसुखैकरूपममलं ब्रह्मैव तच्छाश्वतम् ।
तत्प्राप्ता वयमभ्युपाय इति च प्रज्ञानसंशीलना-
दन्तस्तोषविकासिवक्त्रकमलः सोऽयं विवेकः सुधीः ॥१६॥

अस्य नाम्नि स्मृतेऽपि मोहो न प्रभवत्येव । (*पुरतो निर्दिश्य*)

---

आसत्यलोकादात्वा वोर्चैर्विरक्तिरेव वैराग्यमिति भावः । न कुत इति । केनापि किमपि फलं नेत्यर्थः । स्वरूपातिरिक्तफले वैराग्यादिति यावत् । **कणादिति** । अतितुच्छ इति यावत् । **अर्णवेति** । अर्णवानां समुद्राणां मेलनेन परस्परसंबन्धेन "एकार्णवे तु त्रैलोक्ये" इत्यादिना प्रलयेऽर्णवानां मेलनवर्णनादिति भावः । जगती भूमिः, तृट्यत्छिन्नं सत्, भ्रश्यतु पततु, उत्करैर्ग्रहैरित्यत्र च सहेत्यर्थः । अस्य विरागस्य मीयते हिंस्यते न किमपि हीयत इति भावः । परासुः गतप्राणः अप्राकृतसुखस्य स्वरूपसुखस्य प्रापणे कृतं निश्चितं प्रातिभव्यं याभ्यां तावित्यर्थः। कृतबुद्धयः कृतात्मान इत्यादाविव कृञो ज्ञानवाचित्वं बोध्यम् ।

**अपथेति** । अत्रापथविधावित इति विषयकूपनिपातेति च निर्दिष्टक्रियार्थत्वादिन्द्रियेष्वारोप्यमाणानां विषयिणां कुटिलतुरगाणां परिणामालंकारः। अवगम्य अवबुद्ध्य । सद्गुणेति श्लेषेण रज्जुशतेनेत्यपि लभ्यते । ईश्वरः समर्थः। अत्र "यस्येन्द्रियाण्यवश्यानि दुष्टाश्वा इव सारथेः । न स तत्पदमाप्नोति संसारं चाधिगच्छति ।"

यस्येन्द्रियाणि वश्यानि सदश्वा इव सारथेः ।
सोऽध्वनः पारमाप्नोति" इति मूलश्रुतिरनुसंधेया ॥

**एतेनेति** । बहिरबहिरिति शमदमेति च यथासंख्यनिर्देशेनेत्यर्थः । यथोक्तविपरीतावेव शमदमावित्यन्ये । संयमेन्द्रियैस्तापसश्रेष्ठैः स्वकार्याय रावणा-

अयं विरागः परिशुद्धमूर्तिरलक्षितब्रह्मपुरंदरादिः ।
तदस्य दृष्ट्या न कुतोऽपि किंचित्कणात्कणीयान्कनकाचलोऽपि ॥१७॥

किं च—

मज्जत्वर्णवमेलनेन जगती कान्तारशैलोत्करै-
स्त्रुट्यद्भ्रश्यतु चान्तरिक्षमभितो नक्षत्रचन्द्रग्रहैः ।
कल्पान्तज्वलनः प्रसृत्य सकलं साटोपमालेढु वा
तत्वामर्शविनोदिनोऽस्य तु दृशा लोमापि नो मीयते ॥१८॥

---

दिवधाय। अत्र स्मृतिमानलंकारः। "पंकजं पश्यतः कान्तामुखं मे गाहते मनः" इत्यादिवत्।

**योगेति**। अलब्धलाभो योगः। लब्धपरिपालनं क्षेमः। योगक्षेमार्थमीश्वरमधिगच्छेदिति स्मरणादिति भावः। अकाण्डे अनवसरे नानाविधाः क्रतवः वाजपेय पौण्डरीकादयः। तेषां वितती: परम्पराः। सदृशमेव युक्तमेवेति यावत्। अतिबहुलकन्दलनमुद्धन्निशिता तीक्ष्णा शिखा येषां तानि ज्वालजालानि तैर्जटिलानि निबिडानि "वह्नेर्द्वयोर्जालावित्यभिधानकोशस्मरणात्। ज्वालशब्दः पुंस्यपिं। **भुवनेति**। पाशुपतादिमहास्त्राणां भुवनहितत्वं तावदर्जुनश्रीरामचन्द्रादिचरितनिरूपणे भारतशिवराघवसंवादादिषु प्रसिद्धम्। तत्र हि स्त्रीबलमाश्रित्य ह्यर्जुनश्रीरामचन्द्राभ्यां तत्तादृशकुरुसैन्यरावणादिवधः कृत इत्युपवर्णितम्। **स्वयमिति**। मन्त्रदेवतैक्यस्यपंचविधैक्यबोधकमन्त्रशास्त्रे त्रिवक्षितत्वादिति भावः। उपसदनेन उपगमनेन। ततः किमित्यत आह एतानीति। स्मृतेन स्मरणेन। प्रत्युपस्थापितानि सन्निधापितानि श्रेयः शत्रुवधादिप्रकृतत्वात् अस्त्रप्रिया इति वक्तव्ये शास्त्रग्रहणं दृष्टान्तार्थम्। प्रतिपादनेन दानेन। आत्मनिघ्नीकृतः वशीकृतः। विधेयेषु कृत्येषु। मन्त्र इति द्वाविंशदक्षरः शरभमन्त्र आकाशभैरवकल्पादौ प्रसिद्धः। **बगलेति**। बगलामुखीमन्त्रमाहात्म्यं देवीतन्त्रेषु

तदेतस्य संनिधाने कामः परासुरेव । (*इतरतो निर्दिश्य*) ताविमाव-प्राकृतसुखप्रापणकृतप्रातिभव्यौ अपरिमितसुकृतपरिपाकभूतौ शमदमौ ।

अपथविधाविनो विषयरूपनिपातकृतो
बहिरबहिश्चरेन्द्रियकरालतुरंगणान् ।
दृढमवयम्य सद्गुणशतेन पदं परमं
गमयितुमीश्वरः शमदमप्रतिमो न परः ॥१९॥

**राजा**—(*स्वगतम्*) एतेन बहिरिन्द्रियनिग्रहः शमोऽयं अन्तरिन्द्रियनिग्रहो दमोऽयमित्यभिहितो भवति ।

**चित्तशर्मा**—वयस्य, तदेतरविश्लष्टतयैव गम्यतामिष्ट-लाभाय ।

---

द्रष्टव्यम् । तदमुना उक्तशरभादिमन्त्रेण । तदसोः कर्मधारयः । मनुकोटयः सप्तकोटि महामन्त्रा इत्यादिवचनादिति भावः । श्रेय इति । वश्याकर्षणादि-दशविधप्रयोगसाध्यं फलमित्यर्थः । श्येनेनेति । अथैष श्येनोऽभिचरन् यजेतेति विहितेन श्येनाख्ययानेनेत्यर्थः । अभिचरन् शत्रु जिघांसन् । श्येनशब्दस्य यागनामत्वं पूर्वतन्त्रे तद्व्यपदेशं चेत्यधिकरणे श्येनशब्दः पक्षिपर इति पूर्वपक्षं कृत्वा यथा वै श्येनो निपत्यादत्त निपत्यादत्त एवमेनं द्विषन्तं भ्रातृव्यं निपत्यादत्त इति वाक्यशेषदर्शितोपमानोपमेयभावस्य पक्षिण्यसंभवान्नाम-धेयमेव श्येनशब्द इत्युक्तम् । तदेतद्वाक्यशेषितमर्थं राजप्ररोचनाय संकलयति सयथेति । स प्रसिद्धः पक्षी पृथुकान् शिशून् दुर्जयानपीति शेषः । अग्रे शत्रु-वधानन्तरं अकण्टकं निःसपत्नम् । अत्र श्येनादियागस्य वैदिकत्वेऽपि श्येनाद्वधो वधाच्च नरकमित्यनर्थफलत्वात् तामस भक्तिविषयत्वमिति ध्येयम् । फल्गुस्व भावैः स्वभावतस्तुच्छैरिति यावत् ।

त्वय्यमीभिर्वृते दृष्टे सयमीन्द्रैर्वनाद्वनम् ।
नीयमानः स्वकार्याय स्मर्यते रघुनन्दनः ॥२०॥

**अविद्या**—विषयवासने, क एते राजानमभितः परिवार्य गच्छन्ति ।

**विषयवासना**—परिसरवर्तिनो योगक्षेमार्थमुपागताः केऽपि तापसाः ।

**राजा**—(*पुरतो निर्दिश्य*) किमिदमकाण्ड एव विद्युत्पुंजपिजरितमिव सप्रकाशं नभो दृश्यते ।

---

अतिचिरेति । सिद्धमन्त्रगुरुगवेषणमतिदुष्करम् । ततस्तत्परिचर्या ततः पुरतश्चरणीयत्वाद्विनियोगाख्यकर्मणः पुरश्चरणं इत्युक्तलक्षणपुरश्चरणस्य मन्त्रेषु प्रायेण प्रत्यक्षरलक्षमावृत्तिरूपस्यानुष्ठानम् । तच्चातिभीषण श्मशानचैत्यादिष्वित्यादि क्लेशो तन्त्राणाम् ।

"सप्तकोटिमहामन्त्रश्चित्तविभ्रमकारिणः । इति वचनाच्चित्तविभ्रमकारित्वमपि द्रष्टव्यम् । पाशुपतमिति । पाशुपतादीनि षट् दर्शनानि प्रसिद्धानीति भावः । तदेतेष्विति । समस्तं पदं गणपत्यादीनां पाशुपत्यंशत्वादिति भावः । दीक्षेथाः समयशाम्भवनिर्वाणादिप्रकारेणेत्यर्थः । समयादिदीक्षाप्रकारस्तु शिवपुराणकाकिकाधागमैरवगन्तव्यः ।

किमपीति । सामान्येनोक्तं तद्विशेषपरमपुरुषार्थं लाभोपन्यासेन दृढयति स इत्यादिना । तत्र तात्पर्य वशात् समासनिविष्टस्यापि पशुपतेः परामर्शः । धराधगन इति तेजोविशेषानुकरणम् । मौर्वीति दुराधर्षत्वबहुफलत्वादिना सादृश्यं बोध्यम् । वाजपेयेति । स्वाराज्यकामो वाजपेयेन यजेत' "राजा राजसूयेन यजेत ।" अभ्यासं यः षडहस्त्रयछन्दो माश्चतुष्टोमाग्निष्टोमो विश्वजिदतिरात्र इति खण्डविहितः पौण्डरीकः । आदिपदेन एकोनषष्ठिरेकाहा

**संकल्पः**—देव भवदभ्युदयाय सकलमन्त्रतन्त्रपटलीर्नानाविध-क्रतुविततीरुपासनाश्च संनिधाप्य तामसी च शिवभक्तिरितोमुखतया भवदुपगमं प्रतीक्षते ।

*( राजा ससंभ्रमादरमभिगमनं नाटयति )*

*(ततः प्रविशतः शिवभक्ती)*

**शिवभक्तिः**—यथाकथंचिदावाभ्यामैहिकामुष्मिकाभ्युदयविशेषेषु निकाममवकृष्य जीवराजोऽयमविद्याविधेयीकरणीयः ।

*(राजा सप्रश्रयमुपश्रुत्य प्रणमति)*

**भक्ती**—वत्स, सकलकल्याणभाजनं भूयाः ।

**राजा**—भगवत्यौ, मदुद्देशादिहोपगमनस्य प्रयोजनमवगन्तु-मिच्छामि ।

**भक्ती**—वत्स, भवदभिनन्दनमन्तरेण न किंचिदिह नौ साधनीयमस्ति ।

---

अष्टचत्वारिंशदहीनादीनामेकाहाहीनसत्राणां सोमानां काम्येष्टिपशूनां च ग्रहणं प्रतिभवतीति फलमत उपपत्तेरित्यधिकरणे कर्मभिः प्रीतस्येश्वरस्य कृषिन्यायेन फलदातृत्वेन सिद्धान्तितत्वादिति भावः । अत एव शिवरहस्ये ।

क्रतौ सुप्ते जाग्रत्वमसि फलयोगे क्रतुमताम्
क्व कर्मप्रध्वस्तं फलति पुरुषाराधनमृते ।
अतस्त्वां संप्रेक्ष्य क्रतुषु फलदानप्रतिभुवं
श्रुतौ शुद्धां बद्ध्वा दृढपरिकरः कर्मसु जनः ॥ इति श्लोके

**राजा**—सदृशमेव खलु तद्भवादृशीनां महानुभावानाम् । ( *पुरतो निर्दिश्य* ) भगवत्यौ, किमेतदतिबहलकदलनसितशिखज्वालाजालजटालानि कान्यपि महोमण्डलानि दृश्यन्ते ।

**तामसी**—भुवनहिताय बभूवुः पशुपतिविष्णवादयः, स्वयं यान्येतानि संनिदधते पाशुपतादीनि तानि तेऽस्त्राणि ।

**राजसी**—वत्स, सप्रश्रयेणोपसदनेन परिगृह्यन्तामिमानि दिव्यास्त्राणि । एतानि स्मृतप्रत्युपस्थितानि समयेषु भवतः श्रेयो महद्विधास्यन्ति ।

**राजा**—तथा (*इति चरणग्रहणं नाटयति*)

---

कर्मणां फले परमेश्वरः प्रीतिद्वारा फलप्रद इत्युक्तम् । **गुणफलत्वेनेति** । 'पशुकाम उक्थ्यं गृह्णीयात्' गोदोहनेन पशुकामस्य समूह्यं चिन्वीत पशुकाम इति पशूनां, क्षेत्रशब्दस्य पत्नीपरत्वे अभिद्वितीयां जायामश्नुते योऽग्निं नाचिकेतं चिनुत इति पत्न्याः केदारपरत्वे 'परिचार्यं चिन्वीत ग्रामकाम' इति केदारविशिष्टग्रामस्य अतिरात्रेण प्रजाकामं याजयेदिति प्रजाया, आदिपदेन 'षोडशिना वीर्यकामं स्तुवीत' श्येनचितं चिन्वीत सुवर्णकाम' इत्यादिवाक्याम्नातानां वीर्यादीनां च उक्थ्यादिशब्दोक्तसंस्थादिलक्षणगुणफलत्वं बोध्यम् । तथा च नान्तरीयकतया तत्सिद्धेर्नातीव श्रम इति भावः । अत्यल्पमिदमुच्यते सकलत्रैलोक्याधिपत्यमपि वैष्णवं वामनमालभेते स्पर्धमानो विष्णुरेव भूत्वेमान् लोकानभिजयति मयि वर्च इत्येतेन कल्पेन चत्वारि वर्षाणि प्रयुंजानस्त्रयाणां लोकानामाधिपत्यं गच्छतीत्यादि श्रुत्युक्तकर्मभिरेव सिद्ध्यतीत्याह त्रिलोकीति । त्रिचतुरेति । यद्यपि विष्णुत्वप्राप्तिस्त्रैलोक्याधिपत्यरूपा नाल्पस्य कर्मणः फलं भवितुमर्हतीति चित्तशुद्धौ यज्ञादिकमिव चिरतरमावर्तनीयत्वात्त्रिचतुरेत्यनुपपन्नम् । तथापि स्वल्पकालेन कर्मभिरेव तत्सिद्ध्यतीत्यत्र तात्पर्यम् । बहुवित्तेति । वाजपेयादिक्रतुषु यथोक्त दक्षिणा-

**असूया**—भट्टिनि, राजानः खल्वपूर्वशस्त्रास्त्रप्रिया भवन्तीति पाशुपतादिदिव्यास्त्रप्रतिपादनेन शिवभक्तिम्यामात्मनिघ्नीकृतो देवः ।

**राजा**—(*सपरितोषम्*) भगवत्यौ, परमनुगृहीतोऽस्मि । निःशंकमभिमतेषु विधेयेष्वनुयुज्यतामयं जनः ।

**तामसी**— राजन्, इतः परिसर एव । पुरतो निर्दिश्य ।

**मन्त्रोऽयं शरभेश्वरो विजयते सर्वार्थचन्तामणि-**
**विख्यातो बगलामुखीमनुरसावल्याश्रमैः सिध्यति ।**
**यस्यानुग्रहमीहसे तदमुना धन्यः ससर्वोभवे-**
**त्सन्त्येवं मनुकोटयोऽत्र निरतः श्रेयोऽखिलं प्राप्नुहि ॥२१॥**

---

प्रसर्पकान्नदानाज्यपश्वादिषु व्यक्तयः दीक्षाद्युपवासैर्देहस्यायास इत्यर्थः । **इमा इति** । उपासनानां मानसवृत्तिविशेषतया वित्तव्ययादिक्लेशाप्रसंगादिति भावः । **पंचाग्निविधेति** । "श्वेतकेतुर्हारुणेयं इत्यारभ्य छान्दोग्ये पंचमाध्याये समाम्नाता पंचाग्निविद्या । ततस्तत्रैव प्राचीनशाल औपमन्यवः इत्यारभ्याध्यायपरिसमाप्तेराम्नाता वैश्वानरविद्या । तत्र केषांचिद्व्यष्ट्युपासनमुक्त्वा तान् होवाचैतैरेव खलु यूयं पृथगिवेममात्मानं वैश्वानरं विद्वान् सोन्नमत्थेति व्युष्ट्युपासनं प्रतिक्षिप्ययस्त्वेतमेवं प्रादेशमातमभिविमानमात्मनं वैश्वानरमुपस्तेत्यारभ्य तस्य ह वा एतस्यातमनो वैश्वानरस्य मूर्धैव सुतेजा इत्यादिना समष्टिवैश्वानरोपासनमाम्नातम् । तत्र वैश्वानरो जाठरोऽग्निरन्योवैश्वानरो वेति संशय्य वैश्वानरः परमेश्वर एवेति निर्णीतम् वैश्वानरः साधारणशब्दविशेषात् इत्यधिकरणे । पर्यंकविद्या बृहदारण्यके दहरविद्या प्रागेव दर्शिता । इतीति एवं नानाप्रकारं इत्यर्थः । तथा चान्तरादित्यविद्योपासको स विद्या शाण्डिल्यविद्यादयः तत्तद्वेदशाखा एतास्विति । उक्तविद्यानां प्रत्यक्षनिर्देशः । भावालवाले चित्ताधारे गुणफलयोरुपासनास्वनुसंधानस्य गुणोपसंहारपादे

अथवा

श्येनेनाभिचरन् यजस्व स यथा श्येनो निपत्यच्चणा-
दादत्ते भुविकु कुक्कुटादिपृथुकानेवं द्विषो दुर्जयान् ।
आदत्ते स किलाध्वरोऽतिरभसादग्रे तवाकण्टकं
साम्राज्यं भविता तवोत्तरमितः किं नाम भाग्यं परम् ॥२२॥

**राजसी** —( *सासूयं, जनान्तिकम्* ) किमेभिरिन्द्रजालैरिवाति-फल्गुस्वभावैरतिचिरसाध्यै रीषदपचारेऽपि चित्तविभ्रमकारिभिः । इत आगम्यताम् । (*इति राजानं अन्यतोऽवकर्षति*)

**राजा**—(*स्वगतम्*) अहो प्रकृतिगुणदोषादनयोरप्यसूया ।

**राजसी**—वत्स, दृश्यतामग्रेऽपि । पाशुपतं, गाणपतं, सौरं, शाक्तं पाञ्चरात्रमिति पञ्च मतानि जयन्ति ह्येतानि स्कान्दषष्ठानि ।

---

स्थितत्वात् दहरविद्यामिति तत्र स यदि पितृलोककामो भवतीत्यादि श्रवणादिति भावः ।

वेदारण्येति । परभागेऽपि विद्यायाः सविधमुपगत इति अर्थः । तस्याः पदान्तर एव विद्येति प्रागुक्तत्वात् सावहित्थं अवहित्थाकारगुप्तिः तया सह अभिनिवेशं आस्थां मदनुरोधि प्रवृत्युन्मुख इत्यर्थः । यथेति । यत इति शेषः । तादृगित्युक्तं प्रेम्णो निरतिशयत्वमभिनीय दर्शयति अयमिति । माने स्वस्य सौन्दर्याद्यभिमाने म्लानत्वमेवाह गतेति । प्राणेति । प्राणाधारणमेव हृदय-दाहकः तीव्रानल इति भावः । अयं व्यवहारः किमेभिरित्युक्तं व्यापारसाध्य-फलाभावं फलस्य तुच्छत्वोपपादनेन विशदयति ध्रुवमित्यादिना मनाक् ईषत्

तदेतेषु श्रेयः पशुपतिमतं तत्र नियतो
यदि त्वं दीक्षेथास्तदुपरि दुरापं न किमपि ।
स दत्ते सारूप्यं शतमखमुखामर्त्यमुकुटी-
मणिस्तोमज्योतिर्धगधगनकिंजल्कितपदम् ॥२३॥

अथवा । मेरुमन्दरादय इव वाजपेयराजसूयपौण्डरीकादयो महाक्रतवः इतः सहस्रशो दृश्यन्ते । तदेतेषु येषु केषुचिदभिलाषित-ममिसंधाय पशुपतिराराधनीयः ।

प्रसीदन्नेतेन प्रतिभवति देवस्तव फले
पशुक्षेत्रापत्यादि च गुणफलत्वेन भवति ।
त्रिलोकीसाम्राज्यं त्रिचतुरदिनैः संभवति चे-
दमुष्यानुष्ठाने बत कथमभिज्ञो न रमताम् ॥२४॥

यदि तावदमीषु बहुचित्तव्ययायाससाध्यतया मनसो न प्रवृत्तिः, तर्हि तिष्ठतु । परतो दृश्यताम् । इमाः किल शंखपद्मादिनिधिदेवता इव पंचाग्निविद्येति वैश्वानरविद्येति पर्यंकविद्येति च बहुधा महो-पासनाः सहस्रमितो दृश्यन्ते ।

---

विमर्शविचारविफलमिति तद्यथेह कर्मचितो लोकः क्षीयत एवमेवामुत्र पुण्यचितो लोकः क्षीयत इति कर्मफलस्य क्षयिष्णुत्वाभिधानेनातितुच्छत्वान्न केवलं फलस्य स्थायित्वादिति भावः । किन्तु फलमेव किमपि नेति भावः ।

नन्वस्तु वैफल्यम् । तथापि कर्माणि कर्तव्यान्येव अन्यथा भक्तिनियोगा-तिक्रमे प्रस्तुतं भज्येतेत्यत आह किं बहुनेति । कियत्कालानिति समस्तं पदम् । लुठनमितीति इति हेतो अन्तःकारणात् एवमुक्तमित्यर्थः ।

**एतासु या काचन कल्पवल्ली भावालवाले भवतो निधेया ।**
**न भारलेशो न च दूरयानं फलन्त्यभीष्टानि भवन्मतानि ॥२५॥**

**चित्तशर्मा**—भगवति, का नाम सा महोपासना यत्र किल संकल्पत एव सर्वकामार्थसिद्धिः श्रूयते ।

**राजसी**—सा किल सर्वोत्तमा ।

*(इति तदन्तिकमुपनीय राजानमियमसाविति दहरविद्यां दर्शयति)*

**राजा**—( *सहर्षम्* ) ( *आत्मगतम्* ) दिष्ट्याहमद्य वेदारण्यपरभागसविधमुपागतोऽस्मि ( *प्रकाशं सावहित्थम्* ) भगवति निरुपाधिवत्सलया भवत्या निकाममनुगृहीतोऽहम् । एतेषु येषु केषुचित्कर्मसु यासुकासुचिदुपासनासु च विरचिताभिनिवेशो यथामति यथोपपत्ति च शिवमाराधयामि ।

*( इति विद्यास्वभिनिवेशं दर्शयति )*

**प्रवृत्तिः**—सखि विषयवासने, दिष्ट्या फलित इव देव्या मनोरथः । यदेष काम्यक्रियोपासनास्वभिनिविष्टश्चिरेण मदनुरोधी दृश्यते ।

---

ननु कियदपि चिरं निष्कामकर्मानुष्ठनेनाराधनीयः । परमेश्वर इति प्राक् मैत्रीमुखेन शिवभक्तिनियोगात् कर्तव्यानि कर्माणीत्यत आह भक्त्येति । सांप्रतं इदानीं निवृत्तीति भावः । विषयदोषदर्शनेन निर्विण्णस्यैव निवृत्तिरिति भावः । तत इति निवृत्तिहेतुरिति । निवृत्तेः सूचनादेव तत्सन्नियोगशिष्टोऽष्टाङ्गयोगोऽपि सूचित एव । निवृत्या सममीश्वरस्य दौवारिकमष्टांगयोगमित्युक्तत्वादिति ध्येयम् । तदेवमुक्तेनानेन प्रकारेण विरुद्धत्वे हेतुरपरिशुद्धेति वृत्तिव्यापार तत्प्रतिहार भूमिः द्वारदेशः । साम्बेति

**विषयवासना**—विमर्शनीयम्, अधुनापि मम संदेह एव ।

**अविद्या**—मम तु न संदेहः । यथापुरमस्मासु विमुख एव । कुतोऽपि दाक्षिण्यादाभिमुख्यमभिनयति । परश्वायमस्मासु कथमेताव-दुदासीत । धिक्प्रदग्धमेतन्मम जीवितम् ।

**गते ताहक्प्रेमण्ययमहमिति द्वैतरहिते**
**चरत्यग्रे कस्मिन्नपि जन इव प्रेयसि निजे ।**
**शनैर्माने म्लाने गतगरिमणि प्राणधरणा-**
**त्परो नैव स्त्रीणां हृदयदहनः क्रूरदहनः ॥२६॥**

**राजा**—( *सविषादं* ) सखे चित्तशर्मन् अतिचिरेण सूत्रनर्तित-प्रतिमोपममनपेक्षितव्यापारैरात्मानमायासयामि ।

**चित्तशर्मा**—( *स्वगतम्* ) अयमस्य विद्याभिरतिरसाभिनिवेश-परिणामः । ( *प्रकाशम्* ) वयस्य कुत एवम् ।

**राजा**—सखे श्रूयताम् ।

---

ब्रह्मविद्याधिदेवतायाः । श्रीगौर्या प्रसादोऽप्यावश्यक इत्याशयेन साम्बविशेषणम् । अध्यक्षीकरणीयः प्रत्यक्षीकरणीयः । अपदेशेन व्याजेन निरन्तरायं निर्विघ्नम् । योग इत्युक्तेति शेषः । अयमष्टांगयोग इति ज्ञात्वा तं प्रणमतीत्यर्थः । निरुध्येति । प्राणायामेन प्राणापानादि पंचापि वायून्निरुद्ध्य । तत्र हेतुः नियमितेति । नियमितः निवारितः परिस्पन्दः चलनं तेन वशितान् वशीकृतानित्यर्थः अतः परं करणेति इन्द्रियग्रामद्वारजालमित्यर्थः । विष्वक् सर्वतः । मन इति । मनो न करणम् । "मनः षष्ठानीन्द्रियाणीति तु यजमानपञ्चा ऋत्विज इत्यत्रानृत्विजमपि यजमानमादाय पूरणप्रत्ययवद-निन्द्रियेणापि मनसा तदुपपत्तेरिति भावः । प्रतीपः विरोधि मंप्रतीति । यत इति शेषः ।

किमेभिर्व्यापारैर्ध्रुवमिह फलं किन्चिति मना-
ग्विमर्शप्रस्तावे मम हि विफलं भाति सकलम् ।

किं बहुना—

कियत्कालानेवं लुठनमिति भक्त्या निगदितो
नियोगोऽपि व्यर्थश्रम इव हि निर्वेदयति माम् ॥२७॥

**चित्तशर्मा**—हन्त भगवत्याः प्रसादः सांप्रतमुदपद्यत । निवृत्तिहेतुर्विषयविद्वेषजनितो वयस्यस्य निर्वेदः । अयमेवावसरो योगपरिचयस्यापि ।

( *ततः प्रविशति निवृत्तिरष्टांगयोगश्च* )

**निवृत्तिः**—ततस्ततः ।

**योगः**—तदनु भगवत्या शिवभक्त्या तदेवमभिहितम् ।— "अद्य खलु जीवराजमतिचिरेण विधिकर्मोपासनासु परिक्लिष्टं चित्तशर्मणा सह वेदारण्यपरभागमानेष्यति निवृत्तिः । तदत्र विरुद्धापरशुद्धवृत्तिनिरोधाय तत्प्रतिहारभूमिमधिगम्यताम् अन्यच्च तस्य जीवराजस्य स्वप्ने साम्बदक्षिणामूर्तिरचिरादध्यक्षणीयः" इति

---

मन्त्रयते रहसि कथयति । साहसं वक्ष्यमाणयुद्धरूपम् कर्ण इति । स्वाश्रमपददर्शनापदेशेन राजायमपकर्षणीय इति प्रागुक्तं स्मरयतीति ध्येयम् । सशिरःकम्पं तथास्त्वित्यंगीकारव्यंजकशिरःकम्पेन सह । पदान्तर एव अतिसमीप एव । चित्तशर्माणमिति चित्ते विषयवासनानां चिरनिरूढत्वादिति भावः । प्रविविक्षति प्रवेष्टुमिच्छति । गलहस्तिकया गले हस्तं निधाय निरसनं गलहस्तिका । निवर्तयतीति अष्टांगयोगेन प्रक्षालितमले चित्ते विषयवासनायाः

**निवृत्तिः**—अहमपि प्रत्यक्षनैष्ठुर्यकलहादिकमन्तरेण तापसानां स्वाश्रमपददर्शनप्रार्थनापदेशेन जीवराजः प्रवेशनीयः इति तथैव प्रहितास्मि ( *उभौ राजानमुपगच्छतः* )

**निवृत्तिः**—( *राजानं प्रति* ) वत्स, निरन्तरायमितो भवदानयनाय भगवत्याऽयमष्टांगयोगोऽपि प्रहितः ।

**योगः**—विजयतां देवः ।

**राजा**—किमयमेव स महात्मा योगः ( *प्रणमति* )

**निवृत्तिः**—( *योगं निर्दिश्य* )

निरुध्य प्राणादीन्नियमितपरिस्पन्दवशिता-
नतो बद्ध्वा गाढं करणपटलद्वारनिकरम् ।
शतच्छिद्रात्कुम्भादुदकमिव विष्वक्परिगल-
न्मनोरुद्धात्मानं गमयितुमसावेव निपुणः ॥२८॥

---

समूलमुन्मूलनादिति भावः केति । अविद्याविषयवासनाद्यभिप्रायेण स्त्रीत्वम् । महतां स्वभाव एवायं किमत्राश्चर्यंपोत्याह प्रमोदेत्यादि । कणीयस्यपि स्वल्पतरापि । परिणतिषु सिद्धिषु ।

व्याधीति । व्याधिस्यानसरायप्रमादालस्याविरति भ्रान्तिदर्शनालब्धभूमित्वानवस्थितत्वानि चित्तस्य क्षेपास्ते योगान्तराया इतिपातञ्जलसूत्रम् । अस्यार्थः । धातुरस्करणवैषम्यं स्त्यानमकर्मण्यता चित्तस्य संशयः उभयकोटि स्पृग्विज्ञान···दः । समाधिःसाधनानामभावनम् । आलस्यं व ायचित्तगुरुत्वाद प्रवृत्तिः । अविरतिः चित्तस्य विषयसंप्रयोगात्मगर्धः । भ्रान्तिदर्शनं विपर्ययज्ञानम् । अलब्ध भूमिकत्वं समाधिभूमेरलाभः । तत्रानवस्थितत्वम् लब्धायां

**अविद्या**—अयि विषयवासने ननु प्रागेव मयाभिहितम्। प्रतीप एवायमिति। संप्रति परतो जिगमिषुरिव निवृत्या सह किमपि मन्त्रयते। किमत्र करणीयम्।

**विषयवासना**—समये साहसमवलम्ब्य पश्यामः।

( *निवृत्तिर्विवेकादीनां कर्णे 'एवमेवम्' इति कथयति* )

**तापसाः**—( *सस्थिरः कम्पम्* ) महाराज तदितः पदान्तर एवास्माकमाश्रमपदम्। तदवलोकनेन वयमनुग्रहीतव्याः।

( *इति राजानं हस्ते गृहीत्वा परभागं प्रवेशयन्ति* )

( *विषयवासना चित्तशर्माणमवलम्ब्य सहैव प्रविविक्षति* )

**योगः**—( *दण्डमुद्यम्य* ) धिक्त्वां पिशाचि।

( *इति गलहस्तिकया निवर्तयति* )

**चित्तशर्मा**—कियदत्र संविहितं भगवत्या। तथाहि।

---

भूमौ चित्तस्याप्रतिष्ठा समाधिप्रतिलम्भे हि तदवस्थितं स्यादिति। एते चित्तस्य विक्षेपानवयोग···लायोगप्रतिपक्षायोगान्तराया इत्यभिधीयन्ते। इति दुःखेति। दुःखदौर्मनस्यांगमेजयत्वंश्वासप्रश्वासा विक्षेपसहभुव इति सूत्रम्। अस्य भाष्यम्—

दुःखमाध्यात्मिकमाधिदैविकमाधिभौतिकं च, येन विहिताः प्राणिनस्तदुपघाताय प्रवर्तन्ते, दौर्मनस्यं इच्छाविघाताच्चित्तविक्षोभः। यदङ्गान्येजयति कम्पयति तदंगमेजयत्वं प्राणो यत् बाह्यं वायुमाचामति सश्वासः कौष्ठयं वायुर्निश्वसति सप्रश्वासः एते विक्षेप सह भुव इति। उत्सृष्टतयेति। अभ्यासवैराग्याभ्यां निरोध इति सूत्रोक्तविवेकदर्शनाभ्यासविषयवैराग्याभ्यां

निवृत्तेरग्रे का प्रभवतु तयामी च घटिता
विवेकाद्या भक्त्या तदुपरि स योगोऽपि घटितः ।
प्रमादाशंका न प्रसजति कनीयस्यपि यथा
तथा संनह्यन्तः परिणतिषु मुह्यन्ति न बुधाः ॥२६॥

वयस्य, दिष्ट्या योगप्रभावेण व्याधिस्त्यानसंशयप्रमादालस्याविरति भ्रान्तिदर्शनालब्ध भूमित्वानवस्थितत्वादिभिर्विक्षेपैः दुःखदौर्मनस्यादिभिस्तत्सहजातिभिर्वृत्तिभिश्चोत्सृष्टतया सुनिर्मलमात्मानं पश्यामि । दिष्ट्यायमस्माकमेतदनुग्रहलाभः । अस्य तावन्महात्मनोऽवयवभूता यमनियमासनप्राणायामप्रत्याहारधारणाध्यानसमाधय इत्यष्टाविमे महाभागाः । अत्र अहिंसा सत्यमस्तेयं ब्रह्मचर्यं परिग्रह इति पंचैते यमा नाम । शौच संतोष तपः स्वाध्यायेश्वरप्रणिधानानीत्येतें तु पंच नियमाः । तदेतेषामेकैकस्य प्रभावो गिरामभूमिः । दिङ्मात्रमुदाह्रियते । श्रूयताम् यत्रायमहिंसा नाम यमः प्रतिवसति तत्र तनुभृतामन्योन्यवैरगन्धोऽपि न प्रसरति दृश्यतामत्रेदमाश्चर्यम् ।

---

विक्षेपाणामुत्सृष्टतयेति भावः । अवयवभूता इति अङ्गानीत्यर्थः । तथा च सूत्रम्—"यमनियमासनप्राणायामप्रत्याहारधारणाध्यानसमाधयोऽष्टांगानीति । एषां स्वरूपं निरूपयितु" अहिंसासत्यास्तेयब्रह्मचर्यापरिग्रहायमा इति च सूत्रद्वयमर्थतः पठति । अत्राहिंसेत्यादिना पिबतः निश्चूषयतः वाताशिनः पोतकान् सर्पशिशून् । जरदिति । वृद्धाः अन्धाश्च ये तापसाः तद्गणमित्यर्थः । तोयाधारसरस्तटाकादि अहिंसायामिति तत्संनिधौ वैरत्याग इति सूत्रम् । अहिंसाप्रतिष्ठायां सर्वप्राणिनां परस्परविद्धानां प्रतिष्ठितसहितस्य योगिनस्सन्निधौ वैरत्याग इति व्याख्यातं भाष्ये । तदिहार्थतो लिखितमिति द्रष्टव्यम् । यमनुगृह्णातीति यस्मिन् वर्तत इत्यर्थः । तेनेति । सत्यप्रतिष्ठायां

गोवत्सान्पिबतो निजस्तनमियं व्यालेढि शार्दूलिका
वर्हीं वर्हसमीरणैः सुखयते वाताशिनः पोतकान् ।
गृह्णन्तो जरदग्धतापसगणं पाणाविमे वानरा-
स्तोयाधारगतागतेषु सुखयन्त्यव्याजमैत्रीभृतः ॥३०॥

**राजा**—(*स्वगतम्*) अतः किल भगवान् पतञ्जलिरसूत्रयत् । अहिंसाया (*सा प्रतिष्ठाया तत्सन्निधौ*) वैरत्यागः (*साधनपादे उपसूत्रम्*) इत्यादि ।

**चित्तशर्मा**—अथ सत्याभिधेयोऽयं द्वितीयो यमनुगृह्णाति, तेन यद्यथाभिधीयते तत्तथैव भवति ।

अत एव किल

सर्वेषां च मनुष्याणामर्थं वागनुवर्तते ।
यमिनां तु कृतार्थानां वाचमर्थोऽनुवर्तते ॥३१॥

**राजा**—ततः किल ते शापानुग्रहयोः प्रभवन्ति ।

**चित्तशर्मा**—तदेवमप्रमेयापरिमितप्रभावोऽयं योगः । (*योगं प्रति*) आर्य भवदनुग्रहेण निरन्तरायमभिमतसिद्धिमभिलषति महाराजः ।

---

प्रयोजनमुक्तं क्रियाफलाश्रयित्वमिति सूत्रेण । तस्य भाष्यम्-अमोघास्य वाक् भवतीति उक्तार्थेऽभियुक्तवचनं संवादयति । अत एवेति । अर्थमिति । अन्यथा वाचोऽनृतत्वापत्तिरिति भावः । यमिनां सत्यप्रतिष्ठाशालिनाम् ।

एवमहिंसासत्यस्वरूपमुक्त्वा स्तेयादि स्वरूपमपि स्थालीपुलाकन्यायेन विदितमिति वदन्नुपसंहरति तदेवमिति । एवमुक्तप्रकारेणेत्यर्थः । अहिंसा

**योगः**—सखे चित्तशर्मन्, अपरिमितशक्तेः शिवभक्तेः अनुग्रह-भाजनस्य किमस्य परिहीयते । तदेतैः शमदमादिभिः स्वसमारब्ध-कार्यनिर्वाहजागरुकामत्रभवतीं शिवभक्तिं प्रतिपद्य तया निर्वर्त्यमाना-मिष्टसिद्धिमधिगच्छतु महाराजः ।

**चित्तशर्मा**—यदाज्ञापयत्यार्यः । (*इति सर्वैः सह भक्तिं प्रति गमनं नाटयति*)

**अविद्या**—(*पुरो विलोक्य*) (*सातंकम्*) अयि विषयवासने ! किमेतदापतितम् । यदयमवधूय नः परागत एव वेदारण्य पर-भागम् । देव किमितः करोमि मन्दभाग्या ।

**विषयवासना**—(*सधैर्यावष्टम्भम्*) देवि मा भैषीः । नन्विमे जगज्जयिनः कामादयः सांप्रतमसुनिर्व्यपेक्षमेव पराक्रमाय संनह्यन्ति । तदेतैः सममहमेव तानवस्कन्द्य परावर्तयामि ।

(*इति साटोपं कामादिभिः सह निष्क्रामति*)

(*नेपथ्ये कलकलः*)

---

सर्वथा सर्वदा सर्वभूतानभिद्रोहः । सत्यं यथार्थे वाङ्मनसे, स्तेयमशास्त्रपूर्वं द्रव्याणां परतस्वीकरणं तत्प्रतिषेधोऽस्तेयम् । ब्रह्मचर्यं गुप्तेन्द्रियस्य उपस्थसंयमः अपरिग्रहः विषयाणामार्जनरक्षणक्षयसङ्गहिंसादोषदर्शनादस्वीकरणम् । एवं शौचं मृज्जलादिजनितं मेध्याभ्यवहारादि च बाह्यम् । चित्तमलानां क्षालनमान्तरं संतोषमसन्निहितसाधनाश्वासादधिकस्यानुपादित्सातपः काष्ठ-मौनाकारमौनकृच्छ्रचान्द्रायणादि स्वाध्यायमोक्षशास्त्रमध्ययनं प्रणवजपो वा । ईश्वरप्रणिधानं सर्वक्रियाणां परमगुरावर्पणं तत्फलन्यासो वेति अहिंसासत्यादि-स्वरूपं द्रष्टव्यम् । तथा हिंसासत्यफलं दर्शितं प्राक् । अस्तेयादीनामपि सर्व रत्नोपस्थानं वीर्यलाभः जन्म कथं ता संबोधः शौचात् स्वांगजुगुप्सा

( *इति तैः सह निष्क्रामति* )

**विवेकादयः**—( *श्रुत्वा । सामर्षम्* ) देव कामादयोऽस्मदीयेषु किमप्योजायन्त इव, तत्किमिति विमृश्य परावर्तेमहि ( *इति निष्क्रामन्ति* )

**राजा**—( *पुरो विलोक्य*) हन्त समरसंनाहसमुद्बोधितसंस्कारेण मया स्मृतमात्राण्येव तानि दिव्यास्त्राणि संनिदधते (*सप्रश्रयं प्रणम्य*) भवत्संनिधानमहिम्ना विवेकादितत्तत्प्रतिभटैरेव तत्तदरिनिर्वहणानि क्रियन्ते । तदनुगृह्यतामन्तर्धानेन ।

( *तथा इति दिव्यास्त्राणि तिरोदधति* )

**निवृत्तिः**—यावदहमप्येतेषामायोधनवृत्तान्तमप्युपलभ्य सर्वमिदमावेदयितुं भगवत्याः प्रकाशं गच्छामि ।

( *इति तैः सह निष्क्रामति* )

---

परैरसंसर्गश्च सत्वशुद्धिसौमनस्यैकाग्र्येन्द्रियजयात्मदर्शनयोग्यत्वानि च । संतोषादनुत्तमः सुखलाभः । कायेन्द्रियशुद्धिरशुद्धिक्षयात्तपसः स्वाध्यायादिष्टदेवतासंप्रयोगः समाधिसिद्धिरीश्वरप्रणिधानादिति सूत्रैरुक्तानि फलान्यनुसंधेयानि । तथा स्थिरसुखमासनं पद्मभद्रवीरस्वस्तिकादि तस्मिन् सति श्वासप्रश्वासयोर्गतिविच्छेदः प्राणायामः । तस्मिन्नासने सति स्वस्वविषयासंप्रयोगे चित्तस्वरूपानुकार इवेन्द्रियाणां प्रत्याहारः देशबन्धश्चित्तस्य धारणा तत्र प्रत्ययैकतानताध्यानम् । तत्र देशे तदेवार्थमात्रनिर्भासं स्वरूपशून्यमिव समाधिः इत्यासनादीनां लक्षणसूत्राणि ।

तदेतेषु यमनियमयोः जातिदेशकालसमयानवच्छिन्नाः सार्वभौमा महाव्रतं शय्यासनस्थोऽथ परिव्रजन्वा स्वस्थः परिक्षीणवितर्कजामः संसारबीजक्षयमीक्षमाणस्स्यान्नित्यमुक्त इति भाष्योदाहृताभियुक्तसूक्त्या च प्रदर्शितत्वमत्यन्तापेक्षितत्वं विशेषमभिप्रेत्य तयोः स्वरूपफलोपन्यासः अप्रमेय अविज्ञेय अपरिमित असंख्यपरिहीयते इति न किमपि परिहीयते । सर्वं सिद्ध्यतीति भावः । ततस्मात् शमदमादिभिः सहेत्यर्थः । सातङ्कं सभयं

**राजा**—( *पुरो विलोक्य* )

प्रासादेषु रतात्यये मृगहराः शाटीति संमोहय-
न्विष्वक्शाखिशिखासु लोध्रकुतुकादिन्दिन्दिरान्धावयन् ।
उन्मीलन्नुडुराज एष किरणैरेभिः सुधासान्द्रितै-
र्मामानन्दयते महीध्रशिखरे कैलासमध्यत्तयन् ।।३२।।

**योगः**—( *स्वगतम्* ) अचिरादेव तदपि संपत्स्यते (*प्रकाशम्*) राजन्, अविरतपरितप्तसकलजीवमण्डलविश्रमसुखविधायिनी परिणमति भगवतीयं रजनी तदिह नेदीयसी शमादीनामाश्रमपदे संविश्य तामतिवाहयामः ।

**राजा**—तथा

( *इति निष्क्रान्ताः सर्वे* )

**इति षष्ठोऽङ्कः**

---

असुनिर्व्यपेक्षमिति युद्धोत्साहकथनेन भावि प्राणत्यागोऽपि सूच्यते । अवस्कन्द्य बलात् गृहीत्वा ।

कलकलः कोलाहलः सामर्षः सकोपम् । प्रणम्येति । अस्त्राण्युपलक्ष्याहेति शेषः । अङ्कसमाप्तिं द्योतयितुं "एकाहे वैकरात्रे वा चरितं तत्र वर्णयेत्" इत्यंकलक्षणानुसारेण प्रदोषवर्णनं प्रस्तौति ।

प्रासादेष्विति। रतात्यये सुरतावसाने संमोहयन् भ्रामयन् विष्वक् सर्वतः । लोध्रेति । लोध्रपुष्पमिति निश्चयजनितसंतोषेण मधुकरान् पलायमानान् कुर्वन्नित्यर्थः। महीध्रेति। मम कैलासमन्दरादिमहीधरशिखराधिरूढगौरीपरिवृढसाक्षात्कारं कारयन्नित्यर्थः ।

अत्र भ्रान्तिमदलंकाराणां संसृष्टिः । तदपि साम्बशिवसाक्षात्करणमपि नेदीयसि संनिहिततमे संविश्य शयित्वा तां रजनीं अतिवाहयामः यापयाम. ।

षष्ठोऽङ्कः

---

## सप्तमोऽङ्कः

( ततः प्रविशति निवृत्तिर्विविदिषा च )

**विविदिषा**—ततस्ततः ।

**निवृत्तिः**—तदनु कामादिभिः स्मृतमात्र एव ।

गर्वोन्मादप्रहर्षा इति कति कति वा कामदूताः समेताः
नैर्घृण्यात्क्षान्तितैक्ष्ण्यादय इति शतधा निःसृता क्रोधयोधाः ।
कार्पण्यातृप्तिदैन्यादय इति कति वा निर्गता लोभवर्ग्याः
किंचैते मोहदूताः कति बत मिलिताः स्तम्भतर्कभ्रमाद्याः ॥१॥

हन्त विवेकादिभिरपि तत्तत्प्रतिभटता निजनिजपरिवाराः संनिधापिता एव । अत एव

दिशि विदिशि प्रसर्पति बले परितस्तुमुले
बहलदुरन्तसंतमससंततिदन्तुरिते ।
बलपदरेणुभिर्घनघनाघनमेदुरितै-
र्बत हरिदन्तरं सकलमेव निरन्तरितम् ॥२॥

---

कविरिदानीं सप्तमांकं प्रारिप्सुः तत्र वर्तिष्यमाणनिर्वहणसंधिसंबन्धिनः कथांशस्य संग्राहकं स्त्रीपात्रमात्रप्रयोज्यत्वेन प्रवेशकाख्यमर्थोपक्षेपकं प्रस्तौति तत इति । इतीति प्रकारे । एवं प्रकाराः कति कति

अपि च पूर्वपश्चिमसमुद्रयोरिव सरभससमरसाहसविनिद्रयोर्मोह-विवेकसैन्ययो रन्योन्यसंकलनतः प्रस्तुत एवाभिमर्दः । तथाहि ।

शस्त्रास्त्रपरुषे मोहसैन्ये सति समागते ।
चिन्मुद्रयाभ्यपद्यन्त जेतुकामाः शमादयः ॥३॥

विविदिषा (*श्रुत्वा सहर्षम्*) (*स्वगतम्*) जयस्तु कस्य पक्षमवलम्बते वा द्रष्टव्यम् ततस्ततः ।

**निवृत्तिः**—तदनु ।

**पश्यन्नग्रे विवेकं तरणिमिव तमः क्वापि दुद्राव मोहः**
**कामः क्षामो विरागाद्द्रुतमभजत वा कां दिशं कांदिशीकः ।**
**क्रोधः प्रध्वस्तयोधः शमसविधगतः सद्य एव प्रलिल्ये**
**शेषा तूलाविशेषा कथमरिपृतनोपद्रुता विद्रुता वा ॥४॥**

**विविदिषा**—(*सपरितोषम्*) तदनन्तरमविद्या किमाचारा ।

---

कामस्य भृत्या मिलिता इत्यर्थः । कतिधा कतिप्रकाराः लोभवर्ग्याः लोभवर्ग-भवाः तुमुले अधिके, घनेति घनाः निबिडाः घनाघना मेघवन्मेदुरितैः निबिडैः । अभिमर्दः संप्रहारः अभ्यपद्यन्त आभिमुख्येन स्थिताः, दुद्राव ध्वस्त इति यावत् । कामः क्षीणः विरागात् वैराग्यादिति यावत् । कान्दिशीकः भयद्रुतः सन् प्रलिल्ये प्रलयं गतः । पृतना सेना परावर्तेत प्रत्यागच्छेत् । संमत्य अंगीकृत्य । तदिति दयितप्रतिज्ञाततपोवनगमनमपीत्यर्थः । तथात्वेऽपि तत्पुरोगमनेऽपि इह अस्मिन् संकटे विस्रम्भतः विश्वासात् । पदान्तर एवेति । किन्त्विति शेषः । भाजनीकरणीयः पात्रीकरणीयः । तां शिवभक्तिं, सपदि सद्यः ।

(*प्रवेशकः*)

**निवृत्तिः**—सा तावदसूयाभिहितनिजबलपरिभवजनित-दुःखसंवेगमोहिता तयैव साश्वासमित्थमभिहिता। भट्टिनि, तदेवंविधे महति संकटे भवतीमन्तरेण का प्रगल्भेत। तदिह भवत्यैव व्याप्रियताम्। भवदुपगममात्रेण यथापुरमेव सकलं परावर्तते। तदनु सा (*दीर्घं निःश्वस्य*)

**क्रोधागारमनुप्रविश्य दयितं व्याधूय पादानतं**
**संमत्यापि च तत्प्रतिश्रुततपःकान्तारयात्रामपि।**
**भूयस्तस्य कथं व्रजामि पुरतः सिद्धिस्तथात्वेऽपि का**
**किं कुर्यामिह चित्तशर्मवचसो विस्रम्भतो वंचिताः ॥५॥**

इति सविषादं परावृत्य गन्तुमैच्छत्। अथ प्रवृत्तिस्तामभिहितवती भट्टिनि, मन्युसंवेगजनितदुरध्यवसायैः पुरुषमेनमपहाय क्व गमिष्यसि। यत्र क्वापि तमन्तरेण स्वयमेव किं प्रभविष्यामि इति मन्यसे। 'किंच। परभागगताः' इति किमस्माकमेते विप्रकृष्टाः पदान्तर एव तिष्ठन्ति अतस्तदप्रहाणेनैव तदाचरितानि निरूपयिष्याम इति यथापुरं व्यवहिता एव तिष्ठन्ति त्वं पुनरिह क्व समागता।

**विविदिषा**—अहं किल संदिष्टास्मि भगवता योगेन। वत्से! विविदिषे तत्रभवतीं शिवभक्तिमुपेत्य मन्मुखेन ब्रूहि "भवन्नियोगमनुसंदधता मया कामपि निद्रामुपकल्प्य तत्र साक्षात्कारितसाम्बदक्षिणामूर्तिर्जीवराजः प्रमोदातिशयतरलितो भवत्पादकमलमवलोकयितुमतिमात्रमुत्कण्ठते। तदयमविलम्बितमेव भवदनुग्रह-भाजनीकरणीयः" इति।

**निवृत्तिः**—( *श्रुत्वा सपरितोषम्* ) यावदिममर्थं भगवत्याः कर्णगोचरीकृत्य तामत्र सपदि संनिधापयावः ।

( *इति निष्क्रान्ते* )

***प्रवेशकः***

( *ततः प्रविशति चित्तशर्मणा विवेकादिभिर्योगेन च सह यथा निर्दिष्टो जीवराजः* )

**जीवराजः**—मन्दस्मितस्नपितमञ्जुमुखारविन्दं
वामांकसंगिवनितामुखलोलनेत्रम् ।
चिन्मुद्रिकाविधुतचित्तमलान्धकारं
ज्योतिर्मनो बत न जातु जहाति तन्मे ॥६॥

अपि च—

सा दृष्टिः सदया स च स्मितसुधाहृद्यः प्रसादो मुखे
तच्चोदारगभीरधीरमधुरं वीरासनाध्यासनम् ।
चिन्मुद्रापि च सा चिरंतनतमः संदोहविध्वंसिनी
सर्वं हन्त पुरः पुरो दिशिदिशि प्रत्यक्षमालक्ष्यते ॥७॥

---

यथानिर्दिष्टं इति । अध्यक्षीकृतसाम्बदक्षिणामूर्तिरित्यर्थः । अत एवाह-मन्दस्मितेति । स्नपितरूषितमञ्जुमनोज्ञचित्तेति । विनेयानां सनकादीनां चित्ते यन्मलमविद्यारूपं तदेवान्धकारः । आच्छादकत्वात् तच्चिन्मुद्रिकया-तर्जन्यंगुष्ठाग्रयोगरूपया विधुतं निरस्तं । तथा च ज्ञानोपदेशेनाज्ञाननिरासक-मिति भावः । ज्योतिः "अथ यदतः परो दिवा ज्योतिः दीप्यत इति तदेवाज्योतिषां ज्योतिरायुर्होपासतेऽमृतम् । अत्रायं पुरुषः स्वयं ज्योतिः, "ज्योतिश्चरणाभि धानादिति श्रुतिसूत्रसिद्धं परमेश्वररूपं स्वप्रकाशज्योतिर्मनो न जात्वपि त्यजति । सदा तदेव स्मरतीति भावः । अत्र दक्षिणामूर्तिरूपस्य

(*पुरो विलोक्य*) हन्त विभातप्राया रजनी । यदिदानीम् ।

आयान्त्या दिवसंश्रियेह भगवद्भक्त्येव विध्वंसिते
विष्वङ्मोहतमःप्ररोहनिकरे पुष्यत्प्रसादोत्तरम् ।
आविर्भावयितुं जरात्प्रसवितुर्ज्योतिर्वरेण्यं पुर-
श्चिते शुद्धिरिवाविरस्ति कृतिनः प्राच्यां दिशि श्वेतिमा ॥८॥

(*परतो विलोक्य*) अहो खलु सार्वत्रिकता विषयानुबन्धस्य

मामन्विष्य समागमिष्यति वपुः स्पर्धयत्यथ प्रेमतः
संलापैरपि तोषयिष्यति ततो भुक्तावशेषं बिसम् ।
मद्वक्त्रादुररीकरिष्यति वधूरित्थं सदा चिन्तय
प्रागागत्य विहारपुष्करसरः कोकोऽयमास्तेऽधुना ॥९॥

---

परमेश्वरस्य ग्रहणम् । तस्य अजात इत्येव कश्चिद्भीरुः प्रपद्यते "रुद्र यत्ते दक्षिणं मुखं तेन मा पाहि नित्यं" "अजातमिममेवैकं मत्वा जन्मनि भीरवः । रुद्रस्यास्य प्रपद्यन्ते रक्षार्थं दक्षिणामुखम्"। इति श्रुतिपुराणादि प्रसिद्ध तद्रूपेण मोचकत्ववैशिष्ट्यमभिप्रेत्य । यद्यप्यत्र परमेश्वरस्य अम्बिकासाहित्यं न श्रुतं तथापि वेदान्तेषु ब्रह्मविद्याधिदेवताया भगवत्या हैमवत्याः प्रसादा-देवेन्द्रोपेन्द्रादीनामपि ब्रह्मविद्यालाभ इति प्रतिपादनात् साम्बदक्षिणामूर्ति-ग्रहणम् । तथाहि । केनोपनिषदि यक्षरूपेण प्रादुर्भूतं परमेश्वरं प्रस्तुत्याग्नि-वाय्वादीनां यक्षनिहिततृणदाहचालनाद्यशक्त्या परावृत्तानां पराभवं चोक्त्वा स तस्मिन्नेवाकाशे स्त्रियमाजगामो मां हैमवतीं बहु शोभमानां तां होवाच किमेतद्यक्षमिति ब्रह्मेति होवाचेत्यादिनाम्बिकाया एतोपदेशेनेन्द्रस्य ब्रह्मज्ञानमासीदित्युक्तम् । श्वेताश्वतरोपनिषदि ब्रह्मवादिनो वदन्तीत्यादिना केषांचिदृषीणां ब्रह्मजगत्कारणमित्येतावदवगच्छतां तत् ब्रह्म किं शिवरूपं विष्णुरूपं वेत्येतावदनवगच्छतां संशयं प्रदर्श्य, ते ध्यानयोगानुगता अपश्यन् । देवात्मशक्तिं स्वगुणैर्निरूढाम् । यः कारणानि निखिलानि तानि कालात्म-युक्त्या न्यधितिष्ठत्येकं इति वाक्येन, तेषां पराशक्तेरम्बिकाया ध्यानेनैव शिव एव जगत्कारणं ब्रह्मेति निर्णय आसीदित्युपवर्णितमित्यादि द्रष्टव्यम् ।

सखे, भवदीयसंविधानसुदृढप्रवहणेन निस्तीर्ण इवायमविद्यासंकट-विषयसागरः ।

**चित्तशर्मा**—वयस्य, ननु निस्तीर्य विश्रमसुखमप्यनुभूयते । किमुच्यते—'निस्तीर्ण इव' इति ।

**राजा**—सखे चित्तशर्मन्, अपि नाम निष्प्रत्यूहमेव तामत्र भवतीं विद्यामुपालभेय ।

( *नेपथ्ये* )

इयमहमागतास्मि ।

**राजा**—श्रुत्वा सहर्षम् । सखे, प्रसन्नमधुरगंभीरवृत्तिः "इयमहमागतास्मि" इत्युपश्रुता वाचोयुक्तिः कर्णविवरमाप्याययति ।

( *पुनर्नेपथ्ये* )

वत्से ! निवृत्ते, कियच्चिरं विलम्बसे । सत्वरमुपगम्यताम् । अपि च सत्यमागतोऽत्र चित्तशर्मणा सह राजा ।

---

प्रकृतमनुसरामः । उदारं मनोहरं, गम्भीरं अपरिच्छेद्यं, धीरं निश्चलं मधुरं हृदयंगमम् । एवंविधे वीरासनेऽध्यासनं वीरासनमिति स्थितस्यैकतरः पादोभून्यस्त एकतरश्चाकुञ्चितजानूर्ध्वमित्येतद्वीरासनमित्युक्तलक्षणं बोध्यम् । विभातेति । अनेन स्वप्नस्य प्रातःकालदृष्टत्ववर्णनात् सद्यः सिद्धिकरत्वं सूचितम् । तदुक्तं बृहस्पतिमते—

स्वप्नस्तु प्रथमे यामे वत्सरेण विपच्यते ।
द्वितीये चाष्टभिर्मासैः त्रिभिर्मासैतृ̂तीयके ।।
अरुणोदयवेलायां दशाहेन फलं भवेत् ।
गोविसर्जनवेलायां सद्यः स्वप्नफलं भवेत् ।।

निवृत्तिः—नन्वत्र संनिहित एवायम् । यावदेनमुपसरामः ।

( *ततः प्रविशति निवृत्या सह शिवभक्तिः* )

शिवभक्तिः—वत्से निवृत्ते, अपीदानीं सफलस्ते परिश्रमः । अपि दिष्ट्यायमविद्या दुर्ग्रहान्मोचितो महाराजः । अपि हतसंकल्पास्ते मोहादयः । अपि सफलमोजायितं शमादीनाम् । अपि निर्व्यूढप्रतिज्ञश्चित्तशर्मा । यदयमिममुद्देशमनुप्रापितः चित्तशर्मणा महाराजः ।

---

इति स्वप्ने देवता दर्शनं प्रशस्तमित्युक्तं दैवज्ञवल्लभेन ।

सुवर्णपुष्पाक्षतपूर्णकुम्भचक्रध्वजच्छत्रमहीपतोनाम् ।
उद्यद्दिनेशेन्द्रसुहृत्सुराणां सितद्विजादर्शसुवासिनीनाम् ॥
सुवर्ण धान्याब्जफले गृहीणां भक्ष्यान्नरत्नाम्वरबाहनानाम् ।
संदर्शनं श्रेष्ठमुशन्ति सन्तः स्वप्ने मृतानां च सुचेष्टितानाम् ॥

इति । चिरन्तनतमः माया अनादित्वात् तत्संदोहः समूहः । इन्द्रो मायाभिः पुरुरूप ईयते इत्यादि श्रुत्युक्तमाया बाहुल्याभिप्रायेण तदेकत्वपक्षे तदवस्थाभेदमादाय बहुत्वं बोध्यम् । सर्वं दृष्टस्मृतादि । "अत्रान्तर्बहिः पश्चात् पुरः दिक्षु सर्वासु सैव मे" इत्यादाविव । पर्यायविशेषोऽलंकारः । भगवदिति । भगः ऐश्वर्यस्य समग्रस्य वीर्यस्य यशसः श्रियः ।

ज्ञानवैराग्ययोश्चैव षण्णां भग इतोरणा । इत्यागमाभिज्ञाहित षड्विध भगशाली ।

हरः सर्वस्य हरणाद्विभुत्वाद्विभुरुच्यते ।
भगवान् सर्वविज्ञानादवनादोमिति स्मृतः ॥

इति व्युत्पत्यनन्तरं शिवपुराणे विश्वगिति । मोहः अन्यथाज्ञानं नास्तिक्यासंभवनादि, स एव तमः आवारकत्वात् तस्य प्ररोहाः अंकुराः वृत्तय इति यावत् । तेषां निकरे समूहे जगत्प्रसवितुः जगदभ्यनुज्ञातुः आलोकद्वारा सूर्यस्य सकलजगदभ्यनुज्ञायकत्वस्य, तं जायमानं । घोषा उलूलवो नूदतिष्ठन् । सर्वाणि च भूतानि, सर्वे च कामास्तस्मात्तस्योदयं

**निवृत्तिः**—अम्ब भवदनुग्रहः किमिव हि श्रेयो न समग्रयिष्यति ।

**राजा**—( *सत्वरमुपसृत्य* )

भवविषसागरतरणे तरणे तरणे तमो विमोहस्य ।
भगवति भावकमूर्ते शतकृत्वस्ते नमोऽस्तु शिवभक्ते ॥१०॥

( *इति चित्तशर्मणा सह साष्टाङ्गं प्रणमति* )

---

प्रति प्रत्यायतनं प्रति घोषा उलूलवोऽनुतिष्ठतीति छान्दोग्ये प्रसिद्धत्वात् तस्य ज्योतिर्मण्डलरूपं वरेण्यं सर्वेषां संभजनीयमिति सूर्यपक्षे, परमेश्वरपक्षे तु तत्सवितुरिति गायत्रीमन्त्रार्थप्रत्यभिज्ञानेन तदैकार्थ्यात् उपसर्गं तन्त्रीकृत्य सवितुः सूर्यस्य वरेण्यं ज्योतिः गायत्रीमन्त्रगतं शिवाभिधान भर्गशब्दप्रतिपाद्यमिति योजना ।

पुर इति प्रत्यक्षनिर्देशः । कृतिनः धन्यस्य । अत्र शुद्धे श्वेतिम्नश्च ज्योतिराविर्भावप्रयोजकत्वं तत्पूर्वभवमात्रेणेति ध्येयम् । अत्रान्त्या भक्त्येवेति शिव भक्त्युत्साह बीजनिवेशनात् संधिर्बीजोपगमनमित्युक्तलक्षणं संध्याख्यमंगमुक्तम् । तत इति मयेति शेषः । विहारेति । क्रीडानलिन्यामित्यर्थः । अनेन प्रभातकालकोकस्वभावकथनेन तुल्यसंविधानतया जीवराजस्य विद्यासमागमसूचनात् पताकास्थानकं नामांकस्यांगम् निवद्धमिति ज्ञेयम् । प्रवहणेन प्लवेन ।

ननु निस्तीर्येति । अत्र सुखमप्यनुभूयत इति च संपूर्णफलसंपत्तिवर्णनादादावेवाविर्भावयितुं पुरो ज्योतिरिति प्रकृतकार्यनिर्वाहकपरमेश्वरसांनिध्यनिवन्धनाच्च "समग्रफलसंपत्तिः फलागमउदाहृतः" कार्यनिर्वाहकृत् फले" इत्युक्तलक्षणफलाप्तिकार्यरूपावस्थार्थप्रकृतिमेलनान्निर्वहणसंधिः ।

तल्लक्षणं तु "बीजवन्तो मुखाद्यर्था विप्रकीर्णा यथायथम् । एकार्थ्यमुपनीयन्ते यत्र निर्वहणं हि तत् ।" इति

**शिवभक्तिः**—वत्सौ, अविलम्बितमेवाभिमतेन युज्येथाम् ।

**चित्तशर्मा**—भगवति, भवदीयनिर्देशेन कथं कथमप्यमुं देशमानीतो महाराजः । अनन्तरकरणीये तत्रभवती प्रमाणम् । परं तु विद्याविरहकातरः क्षणमपि विलम्बं न सहते देवः ।

---

प्राचीनेषु वेदारण्यादिप्रदेशविप्रकीर्णानां शिवभक्तिविवेकादीनां पात्राणामत्रांके जीवराज विद्याविवाह रूपैकप्रयोजनसन्निपातस्य स्पष्टत्वाल्लक्ष्ये लक्षणसमन्वयः । अस्य च संधेः

संधिर्निरोधो ग्रथनं निर्णयः परिभाषणम्
प्रसादानन्दसमयाः कृतिर्भाषोपगूहने ।
पूर्वभावोपसंहारौ प्रशस्तिश्च चतुर्दश ।।

इति चतुर्दशाङ्गानि प्रयोक्तव्यानि । तत्र संधिरुक्त एव । अत्र च सखे चित्तशर्मन् इत्येनेनविद्योपलब्धिरूपकार्यमार्गणान्निरोधः । कार्यमार्गणमित्युक्तो निरोधो नाम द्वितीयमंगमुक्तमन्यानि चांगानि तत्र तत्र प्रदर्शयिष्यामः । अस्योत्तरं चूलिकयाह नेपथ्य इति । प्रसन्ननिर्मलमधुर हृदयंगमगम्भीरा-परिमेयवृत्तिर्विन्यासः । उपश्रुतेति उपश्रुतिः दैवात् चिन्तितप्रश्नोत्तर-तापन्नोऽन्यार्थशब्दः । स च सद्यः सिद्धिकर इति दैवज्ञघण्टाघोषः । वाचो मुक्तिरित्येकमिदं पदं वाचो योग इत्यर्थः । "वाक्दिग्पश्यद्भ्यो युक्तिदण्डहरेषु" इति षष्ट्या आलुक् । आप्याययति सुखयतीति यावत् । विलम्बसह इति । अनेन अविलम्बितकार्योपक्षेपात्" ग्रथनं तदुपक्षेपं इत्युक्तं ग्रथनं नाम तृतीयमंगं निबद्धम् । अनेनैवाविलम्बवचनेन शिवभक्तेरुत्साहरूपं बीजमपि निबद्धमिति "बीजं बिन्दुसमन्वितम्" इत्युक्तमंकलक्षणामप्यनुसृतम् ।

वत्स इति । अत्र परिश्रमादीनां साफल्यस्य स्वानुभूतस्य कथनात् 'भूताख्यानं तु निर्णय' इति लक्षितो निर्णयो नाम चतुर्थमङ्गमिति बोध्यम् । तरण इति सप्तमी । लंघन इत्यर्थः । ततस्तरण इति संबुद्धिः । नौके इत्यर्थः । ततः पुनस्तरणे । सूर्येति । भावुकमूर्ते मंगलमूर्ते साष्टांगमिति ।

**शिवभक्तिः**—वत्से विरक्ते मद्वचनादुपनिषद्देवीमुपेत्य ब्रूहि "अत्र किल कुलमहत्तरासु त्वमेकिका परावरज्ञा। सर्वस्य जनस्य विधेयार्थसंदर्शिनी दृष्टिरिव सर्वकार्येषु प्रभवसि। भवदसंनिधानेन सर्वैरितिकर्तव्यता मूढैः स्थीयते तदविलम्बितमेव विवाहनेपथ्यविधिना प्रसाधितामत्र भगवतीं विद्यामानीय पुण्डीरक भवने निधापय इति।

**विरक्तिः**—यदाज्ञापयति भगवती ( *इति निष्क्रामति* )

**शिवभक्तिः**— वत्स किमतीव संभ्रान्त इव दृश्यसे।

---

उरसा शिरसा दृष्ट्या मनसा वचसा तथा।
पद्भ्यां कराभ्यां कर्णाभ्यां प्रणामोऽष्टांग एव च ॥

इति स्मृत्युक्ताष्टांगसहितं यथातथेत्यर्थः। निर्देशेन आज्ञया अत्रलोके कुलमहत्तरासु कुलवृद्धासु एकिका एका परावरज्ञा लोकरीत्या उत्कृष्टापकृष्टाभिज्ञातात्पर्येण तु परं ब्रह्म अवरो जीवः ऋतं सत्यं, परं ब्रह्म आराग्रमात्रोऽह्यवरोऽपि दृष्ट" इति श्रुतेः। तत् स्वरूपाभिज्ञा तत् ज्ञानजनिकेतियोजनीयम्। उपनिषदः तं त्वौपनिषदं पुरुषमिति परमेश्वराधिगमासाधारण साधनत्वात् जीवस्वरूपस्यापि प्रमाणान्तरगोचरत्वादिति भावः। विधेयेति। कर्तव्यार्थबोधिकेत्यर्थः।

यद्यपि अकर्तव्यसिद्धरूपात्मबोधिनी वेदान्ता न कर्तव्यार्थपराः तथापि "श्रोतव्यो मन्तव्यो निदिध्यासितव्य" इत्यादि श्रवणादिकर्तव्यतायास्तदेकप्रमाणकत्वादिति भावः। एतच्च सहकारविधिः पक्षेण तृतीयं तद्वतो विध्यादिवदित्यधिकरण भाष्यानुरोधिन विवरणानुसारेण।

वस्तुवस्तु श्रवणादिषु विधिर्न संभवति श्रवणादेः सूक्ष्मार्थ साक्षात्कारसाधनत्वस्य लोके रत्नतत्वसाक्षात्कारादौ प्रसिद्धत्वात्। अत एव समन्वयसूत्रभाष्यम्। —

**राजा**—भगवति ! तत्किं ब्रवीमि । हर्षातिशयगद्गदया वाचा निगदितुं न पारयामि । भवन्नियोगेन किंचिदिव विश्रान्ति सुखमनुभवन्नवशोपरन्नया विरचितसकलबाह्यकरणमुद्रया योगनिद्रया परिगृहीतोऽस्मि । तत्र किल दिव्यमंगलसूचकं कमपि स्वप्नमालोकयम् ।

---

"किमर्थानि तर्हि श्रोतव्य इत्यादीनि विधिच्छायानि स्वाभाविकप्रवृत्ति विमुखोकरणार्थानि इति ब्रूम इति । नेपथ्यविधिना अलंकारपरिग्रहेण प्रसाधितामलंकृताम् ।

पुण्डरीकेति । पुण्डरीकाख्ये श्रीमच्चिदम्बर क्षेत्र इति प्रतीयमानोऽर्थः अथ यदिदमस्मिन् दहरं पुण्डरीकं वेश्म इति श्रुतिसिद्धहृदयपुण्डरीक इति हृदयम् । बाह्यकरणमुद्रयावरणया योगनिद्रया योगप्रवर्तितया निद्रया । तत्र निद्रायां वर्षानिशीथे वर्षाकालार्धरात्रे गहनान्धकारे दुष्प्रवेशान्धकारे । उद्भटमिति । अतिदृप्तक्रूरजन्तुकं अवशात् अस्वायत्तत्वात् दीनां दैन्यकरम्बितां दशामवस्थां निर्विशामि अनुभवाभ । विपरीतेति अवस्थानां जागरादीनां दुःखबहुलत्वात् तद्विपरीतनिरतिशयानन्दमात्रमवबोधयदिति भावः । ममेति सामोप्यं षष्ठ्यर्थः । मत्समीप इति भावः । निभृतं निश्चलं व्यापारान्तरं विनेति यावत् ।

पुस्तमिति । पुस्तकं अमृतपूरितकलशं अक्षमालां च पाणित्रयेण बिभ्राणमिति भावः ।

चतुर्भुजमूर्तौ तुरीयं भुजं विशिनष्टि—चिन्मुद्रेति । स्वयं चिद्रूप इति विशदीकुर्वन्निति भावः । एकनाथः मुख्यनाथः । अन्येषां तदधीनत्वेनामुख्यनाथत्वादिति भावः । तदिदं कैमुत्येनोपपादयितुं पुनर्विशिष्याह जयसर्वेति । निगमान्तेति । प्रतिपाद्येति शेषः । तथा सति लब्ध्रमाह सत्येति । निरुपाधीति । यमेवैष वृणुत इत्यादि श्रवणादिति भावः । तत्र हेतुमाह दयेति । करुणयेति ।

**शिवभक्तिः**—वत्स, कथमिव ।

**राजा**—

**वर्षानिशीथे गहनान्धकारे वनं किमप्युद्भटदुष्टसत्वम् ।**
**कुतोऽपि हेतोरवशात्प्रपन्नो दीनां दशां कामपि निर्विशामि ॥११॥**

तथासति—

**विघटितसकलक्लेशं विपरीतविभाविताखिलावस्थम् ।**
**आनन्दकन्दलमिव किमपि महोमण्डलं ममाविरभूत् ॥१२॥**

---

"पादोऽस्य विश्वा भूतानीति" श्रुतेः । कर्बुरितचित्रित तदवधारणरणकदुर्वा- रेत्यादि मुखारविन्देत्यन्तं पदम् । सनन्दनादिसनकसनन्दनसनत्कुमारादयः शमवन्तः शिवयोगिनः । कोरकीकृतिः कुड्मलीकरणं चन्द्रे सति पद्मस्य मुकुलीभावादिति भावः। उत्तरार्धं कृत्स्नं एकं पदम्। कर्णधारनाविकः संतानेति। संतानसहित चिन्तामणे इत्युत्तरपदलोपि समासः। शाकपार्थिवा- देराकृतिगणत्वादिति ध्येयम् । आस्ता विषमिति ।

अत्र दैवज्ञवल्लभः स्वप्ने देवतार्चनं प्रस्तुत्य 'सुरपूजोत्सवः सेवा नैवेद्यं प्रणतिः स्तुतिः । नृत्तं संगीतवाद्यं च' इत्यादिना तस्य महाफलत्वमित्याह । निपीड्य उपसंगृह्य, करगतः कल्पकरगतप्राया । तथा च वत्स किमतीव संभ्रान्त इत्यारभ्य विद्येत्यन्तं जीवराजशिवभक्तिभ्यां प्रकृतानुगुण्येन भाषणात् परिभाषा नाम पंचमसंगम् । 'परिभाषा मिथो जल्प' इति तल्लक्षणम् । परिवारेण स्मृतिपुराणादिभिरुपबृंहणैः सह रूपकेषु प्रविशता पात्रेण प्रायेण स्वस्वकार्यमुपन्यस्य प्रविश्यत इति संप्रदायानु- सारेणात्रोपनिषद्देव्याः प्रकृतजीवराजानुग्रहरूपं कार्यमुपन्यस्यति अजरमिति । जरारहितमित्यर्थः ।

तदनु दुःस्वप्नतः प्रबुद्धोऽहमिति निकाममभिनन्दिता सावधानप्रणिहितदृष्टिना मया तस्मिन्महोमण्डले निभृतं निरूप्यमाणे ।

श्यामामुत्पलशोभिनीमगसुतामङ्के दधानं मुदा
पुस्तं चामृतकुम्भमक्षसरमप्याविभ्रतं पाणिभिः ।
अद्राक्षं भसितावदातवपुषं रुद्राक्षमालापुषं
चिन्मुद्राविशदीकृतात्मविभवं स्मेराननेन्दुं शिवम् ॥१३॥

---

अनादीति । उत्पत्तिस्थितिलयरहितकेवलचिद्रूपम् । तदेवेति । अन्यथा तस्या पुरुषार्थत्वप्रसंगादिति भावः । मरुषु मरुभूमिषु प्रसृतामरीचिका एव जलम् ।

तत्र भासमानजलस्य तद्व्यतिरेकेणासत्वादिति भावः । असत् अनिर्वचनीयं तदिति अजरमित्यादिनिर्दिष्ट स्वरूपब्रह्मज्ञानेन मृत्युं अविद्या सुखीभवतेति सुखस्वरूपा भवतेत्यर्थः । प्रागेव तथात्वेऽपि तस्याज्ञानेनासत्कल्पत्वाद्धि प्रत्ययोपपत्तिः । तथा च सर्वाधिष्ठानं ब्रह्मैव सत्यं प्रपंचस्तस्मिन् कल्पितो मरुमरीचिकोदकमिवाधिष्ठानमरुभूमिस्वरूपज्ञानात् ब्रह्मज्ञानान्निवर्तत इति ब्रह्मवित् सच्चिदानन्दब्रह्मरूपेणावतिष्ठते । "ब्रह्म वेद ब्रह्मैव भवतीति" श्रुतेरिति भावः । अजरमित्यादि अमूलश्रुतिः । विजरो मृत्युः न जायते म्रियते वा विपश्चित् तदेतत् ब्रह्मपूर्वमनपरं, "अविनाशी वा अरेयमात्मानुच्छित्ति धर्मा इत्यादिः । एवं स्थितिरपि कथञ्चिदपि परिच्छिन्नः स्यात् 'सत्यं ज्ञानमनन्तं' ब्रह्मेति श्रुत्या त्रिविधपरिच्छेदशून्यस्य स्वे महिम्नि प्रतिष्ठित इत्यनन्यप्रतिष्ठस्य तु ब्रह्मणः कथं स्यादिति भावः । अभीशोरिति । रज्वज्ञानाद्यथा रज्जौ सर्पमध्यस्यतीत्यर्थः । अध्यस्तं च शुक्तिरजतरज्जुसर्पादिकं तत्रैवोत्पद्यते । अन्यत्र सत्वेत्यन्तासत्वे च तत्र प्रतीत्यनर्हत्वात् । सत्वे च बाधायोगात् सदसदात्मत्वे विरोधादिति भावः । अर्थक्रियाभावान्नैवमित्यत आह—त्रासयतीति ।

तदनु—

जय जगदेकनाथ जय सर्वसुराधिपते
जय निगमान्ततत्व जय सत्यसुखाम्बुनिधे ।
जय निरुपाधिवत्सल जयाश्रितकल्पतरो
जय जगदार्तिभंजन जयेश दयाजलधे ॥१४॥

जय करुणानुषङ्गवदपांगतरंग कणा-
धिगततथाप्रभाववलजिन्मुखदेवतते ।
जय जलजासनादिविबुधव्रजमौलिमणि-
प्रकरमयूखकर्वुरितपादसरोजरुचे ॥१५॥

दुर्वारोपनमद्भवार्ति दवथुप्रध्वंसिमन्दस्मित-
ज्योत्स्नाचारुमुखारविन्दपरमानन्दैकसान्द्राकृते ।
सानन्दास्तु सनन्दनादिशमवत्संवातचूडातटी
हस्ताम्भोरुहकोरकीकृतशरत्पर्वेन्दुबिम्बायित ॥१६॥

---

यावदर्थक्रियायाः क्वाप्यसंभवात् । किंचिदर्थक्रियायाः इहापि सत्वादिति भावः । तत्तत्वे रज्ज्वसाधारणरूपे स्वरूपस्य ब्रह्माभिन्नजीवरूपस्य चरं जंगमाचरं स्थावरं इदं परिदृश्यमानं जगत्, तस्य स्वरूपस्य । मिथ्येति अधिष्ठाने त्रैकालिकनिषेधप्रतियोग्येवेति जायत इत्यर्थः । आनीतमिति । अज्ञानातिरिक्तकारणैर्नोत्पादितमित्यर्थः ।

केन पुनरित्यत आह स्वेति । निषिद्यस्थित्वा । "मय्येव सकलं जातं मयि सर्वं प्रतिष्ठतम् मयि सर्वं लयं याति तत् ब्रह्माद्वयमस्म्यहम्" इति कैवल्योपनिषदर्थ इह निवद्ध इति ध्येयम् । तत्र हेतुमाह द्वे इति । आवरण-शक्तिर्विक्षेपशक्तिरिति द्वे शक्तो इत्यर्थः । सहजे स्वभावसिद्धे । सन्नपि कालत्रयाबाध्योऽपि । सद्भूतमिति । सत्वं प्राप्तमित्यर्थः । यथायथं यथास्वे यथायथमिति निपाते अत्र शमदीनामुपनिषत्पर्युपासनकथन त्प्रसादः ।

संसारार्णवकर्णधार सकलक्लेशान्धकारच्छिटा-
चण्डांशो सकलेप्सितार्थ घटनासन्तानचिन्तामणे ।
सत्यज्ञाननिधे सकृत्प्रणमते सायुज्यलक्ष्मीप्रद
स्वामिन्दैवतसार्वभौम दयया मां पाहि साम्ब प्रभो ॥१७॥

इति नितान्तमानन्दपरवशो भगवन्तमहमस्ताविषम् । तदनन्तरं च शिरसा निपीड्य चरणाम्बुजे गुरोरसकृत् प्रणम्य मयि किंचिदुत्थिते उपहूय मामुपगतस्य दक्षिणे श्रवणे किमप्यकथयत् दयानिधिः ।

**शिवभक्तिः**—( *श्रुत्वा, सपरितोषम्* ) *स्वगतम्* । हन्त अतिवत्सलेन भगवता महोपनिषदुपदेशेन परमनुगृहीतोऽसि । इतः करतकल्पैव भवतो विद्या ।

( *ततः प्रविशति निजपरिवारेण सममुपनिषद्देवी* )

---

तल्लक्षणन्तु "प्रसादः पर्युपासनम्' इति । कपिलः सांख्यशास्त्रस्य प्रवर्तकः । कणादः वैशेषिकतन्त्रस्य । जैमिनिरध्वरमीमांसायाः । पातंजलिः व्याकरण-योगस्य । सत्यवतीतनूभवो व्यासः वेदान्तस्य । गौतमः न्यायतन्त्रस्य प्रवर्तकः । तेषां भिन्नभिन्नाः पन्थानः, तेषु च चतुर्थाके केचित् प्रदर्शिताः । अन्ये तत्तत्तन्त्रप्रसिद्धा इति ग्रन्थविस्तरभियोपेक्ष्यते । वस्तुतत्वं सच्चिदा-नन्दात्मकं शिवस्वरूपम् । अत एव शिवरहस्ये—

"रुचीनां वैचित्र्यादृजुकुटिलनानापथजुषां ।
नृणामेको गम्यस्त्वमसि पयसामर्णव इव ॥

इत्युक्तम् । निर्विकल्पकेति । विषयान्तरासंसृष्टस्वरूपविषयवृत्ति धारानिर्विकल्पकसमाधिः । स एव परमेश्वरस्यारामः तत्र तस्या संकुचित-प्रकाशत्वादिति भावः । गीतामृतैः शिवगीतादिभिः अमृतैः मोक्षसाधनैः ।

**उपनिषद्देवी—**

अजरमनादिमध्यमविनाशि चिदेकरसं
किमपि महो जगज्जनकमस्ति तदेव सुखम् ।
मरुषु मरीचिकाजलमिवासदिदं सकलं
तदवगमेन मृत्युमतितीर्य सुखीभवत ।।१८।।

**विविदिषा:**—अम्ब कथमेतत् ।

**स्मृति:—**

अभीशोरज्ञानादहिरुदयति त्रासयति च
प्रतीते तत्तत्वे न किमपि यथा संप्रति तथा ।
स्वरूपस्याज्ञानाचरमचरमित्येवमुदभू-
दिदं तस्य ज्ञाने सति फलति मिथ्यैवसकलम् ।।१९।।

अत्र का नाम कथंता ।

( *विविदिषा पुराणादीनां मुखं पश्यति* )

---

संस्कारेति अलंकारनिर्मलबाह्यदेशं अद्रिसुतया सह आगात् आगतः । अनितरेति । वस्तुत इति शेषः । ममतयेति अभिमानेनेत्यर्थः । श्वेतं ते धवली भवन्ति । शाक्वरेति वृषभेत्यर्थः । श्रवः श्रोत्रं उपनमत् नम्रीभवत् । सुपर्वः देवः, पटलो समूहः । आटीकते आगच्छति ।

जयेति । द्विरुक्तिरादरे । तत एवाह विजयीति । उद्दिधीर्षा उद्धर्तुमिच्छा स एव रसः इच्छा । आम्रवृक्षादिवत् सामान्यविशेषयोः समासः । कल्याणं मंगलमयो मूर्तिशालिन् । अथवानन्तकल्याणगुणैकधन ईश्वरः शिव इत्युच्यते सिद्धिरिति । पौराणिकोक्ते । यद्वा कल्याणमूर्ते हिरण्मयमूर्ते अथ ''एषाऽन्तरादित्य हिरण्मयः पुरुषो दृश्यते' इति श्रुतेः । अद्भुत आश्चर्या चित्रं नानाविधम् । एवं सामान्यतस्तुत्वा संप्रति चित्रापदा-

**पुराणादयः**—वत्से ! एकमेवैतत् ।

**आनीतं न परेण केनचिदिदं स्वाज्ञानविस्तारितं**
**स्वस्मिन्नेव निपद्य तुच्छविषयक्लेशान्विधत्ते बहून् ।**
**सत्यं ज्ञानमनन्तमस्मि तदहं ब्रह्मेति जानाति चे-**
**त्तस्येदं तपनोदये तम इव स्फीतं जगल्लीयते ॥२०॥**

**श्रद्धा**—उपपन्नमेवैतत् ।

**विविदिषा**—भवत्वैवम् । किमत्र मूलमिति विविदिषामि ।

**पुराणादयः**—वत्से । श्रूयताम—

**माया नाम विचित्ररीतिरसती काचिन्मनोल्लासिनी**
**सत्यं वस्तु निगूहति प्रकटयत्यत्यत्यन्तमिथ्यायितम् ।**
**द्वेशक्ती प्रथिते चिरेण सहजे तस्यास्तथा तद्वशा-**
**दात्मा सन्नपि नेक्ष्यते जगदसत्सद्भूतमालोक्यते ॥२१॥**

*( राजा सरभसमुत्थाय चित्तशर्मणा सह साष्टांगं प्रणमति )*

---

नेत्यपदानशब्दोक्तप्रावृत्ततत्तच्चरित्रविशेषानुपन्यस्य तुष्टुवुः । आदौ रावणचरित्रं दर्शयति । विखण्डमित्यादि । खण्डयविखण्ड्यरुण्डातिमुण्डा । निस्तब्धेति । क्रन्ददत्यार्त्रेति च रक्षःकुलाध्यक्षविशेषणम् ।

तत्र नगादित्यादि अकुण्ठतया चण्डिमाकण्डलतया क्रीडितेति तृतीयासमासः । तेन आन्दोलितेति । चण्डिकेति निर्भग्नेति । च कैलासविशेषणम् । चित्तवृत्ते इति संबोधनम् । एतच्च रामायणादौ व्यक्तम् ।

अथ दक्षाध्वरवृत्तान्तं दर्शयति अतिमाद्यमित्यादिगणा वीरभद्रगणाः शंकरसंहितायां तत्कालसन्निहित गणपुंगवक्षतकपोला ।

उपनिषद्देवी—वत्सौ अचिरेण लिप्सितलाभहर्षितौ भूयास्ताम् ।

(*शमादयः सर्वेऽपि ससंभ्रममुत्थाय यथोचितमुपचर्य यथायथम् उपविशन्ति*)

**शिव भक्तिः**—भगवति, महानुभावाह्यसि ।

कपिलकणादजैमिनिपतंजलिसत्यवती-
तनुभवगौतमाभिमतमार्गविभिन्नतया ।
सुरतटिनी समुद्रमिव दीव्यदनेकमुखी
गमयसि वस्तुतत्वमखिलानपि भिन्नरुचीन् ।।२२।।

---

धनुषः कोट्या स तेनास्पष्टवागभूत्'' इति वायव्यसंहितायाम् । द्रुतेत्यादि कश्चिद्द्रवन्तं कश्चिदनुद्रवति । तदेवंविधद्रवणाटोपेन संक्षोभस्तेन । साध्वसं भयमित्यादि बोध्यम् । सदस्येति । समाख्यः वेद्यन्तः प्रदेशस्थित इत्यर्थः । शम्या पृथ्वग्रो दण्डविशेषः । दृषत् हविष्पेषणा धारशिलायूपः याज्ञोय पशुनियोजनार्थस्तम्भः । दण्डः मैत्रावरुणदण्डः । औदुम्बरः निष्ठुररूक्षस्रु चः जुहूप्रभृताद्याः यस्य खादिरस्रुवो भवतीत्युत्पन्न स्रु वः स्रु वेणावद्यवतीति द्रवद्रव्यावदानार्थः तच्छटायाः समूहस्य पर्पटस्यातिजर्जरा माषमया यूपविशेषस्येव यः ठापठापेत्यनुक्रियमाणः शब्दस्तेनोद्भटं कुम्भीपाशुक हविः पाकार्थो भाण्डविशेषः ।

सर्पिर्घट आज्यपात्रम् । ओघः समूहः । ओघः प्रवाहः । समिन्धन दीप्यमान । पिनद्ध बद्धः, भूम बाहुल्यम् । अत्र यज्ञ वास्तुश्रेणिकम् उद्भटं संवर्तमिति च क्रियाविशेषणानि । तथा च उक्तम् तावद्विशेषणविशिष्टं यथा भवति तथा ध्वंसकृद्यो वीरभद्र इति योजना । ''ततस्त्रिदशमुख्यास्ते शक्रविष्णुपुरोगमाः सर्वे भयपरिग्रस्ता दुद्रुवुर्भयविह्वलाः'' इति ।

तदत्र भगवत्या कियच्चिरमुदास्यते ।

**उपनिषद्देवी**—भगवति मत्तो न किंचिदन्तरमास्ते । प्रागेव साम्बशिवानुग्रहेण सिद्धरूपतया प्रवणादयः सम्यक्प्रसाधितया विद्यया सह पुण्डरीकभवनोपकण्ठे निर्विकल्पसमाधिनामनि महेशितुराराामे युष्मदुपगमं महेश्वरसांनिध्यं च प्रतीक्षमाणास्तिष्ठन्ति ।

---

तथा सवज्रिणं सूर्यं रुद्रान् रुद्रगणाग्रणीः ।
भद्रो मूर्ध्नि जघानाशु वामपादेन लीलया ॥
असिभिः पावकं चन्द्रं पटसैस्तु यमं यमो ।
रुद्रश्छितेन शूलेन मुद्गरैर्वरुणं दृढैः ॥
परिघैर्निर्ऋतिं वायुं टङ्कैष्टङ्कधरः स्वयम् ।
ततो देवः सरस्वत्या नासिकाग्रं सुशोभनम् ॥
बिभेद करजाग्रेण देवमातुस्तथैव च ।
चिच्छेद चक्र धारेण बाहुदण्डं विभावसोः ॥
अग्रतोघ्वङ्गुला जिह्वामात्तहव्यां लुलावच ।
स्वाहादेव्यास्ततो देवो दक्षिणं नासिकापुटम् ॥
चकर्त करजाग्रेण वामं च स्तनचूचुकम् ।
भगस्य नेत्रे विपुले शतपत्रसमप्रभे ॥
प्रसह्योत्पाटयामास भद्रः परमवेगवान् ।
ततश्चन्द्रमसं देवं पादाङ्गुष्ठेन लीलया ॥
क्षणात् क्रिमिवदाक्रम्य पातयामास भूतले ।
ततो दक्षस्य यज्ञश्रीः कुशीला भर्तृभिर्यथा ॥
पादाभ्यां चैव हस्ताभ्यां हन्यतेस्म गणेश्वरैः ।
अरिष्टनेमिनं सोमं धर्मञ्चैव प्रजापतिम् ॥
बहुपुत्रंचाङ्गिरसं कृशाश्वं काश्यपं तथा ।
गले प्रगृह्य बलिनो गणपाः सिंहविक्रमाः ॥

*नेपथ्ये*

बध्यन्तामुरुतोरणानि सरसैराशाश्च गीतामृतैः
पूर्यन्तामपि तन्यतां पुरमिदं संस्कारशुद्धान्तरम् ।
आरूढो वृषराजमद्रिसुतया देवोऽयमागादितो
जीवस्यानितरत्वतो मम तया विद्याविवाहोत्सुक ।।२३।।

---

भर्त्सयन्तो भृशंवाग्भिर्निर्जघ्नुर्मूर्ध्निर्मुष्टिभि· ।
शूलवेगप्रभुग्णाश्च छिन्नबाहूरुवक्षसः ।।
विनिकृत्तोत्तमांगाश्च पेतुरुर्व्यां सुरोत्तमाः ।।

इत्यादि पुराणवचनानि द्रष्टव्यानि ।

अरविन्दाक्षेति । एततसर्वं स्कान्दलैङ्गिकादिषु स्पष्टम् । नो इति । अमानोनाः प्रतिषेधः इति परिगणितस्य नोशब्दस्य समासः । सांदृष्टिकेति । व्याधवेषधरेति यावत् । शिवस्य व्याधवेषपरिग्रहश्च किरातार्जुनीय परशुरामोपाख्यानयोः द्रष्टव्यम् । पश्वादीति । देवकामानां चेष्टे मनुष्य-कामानां चेत्यन्तरादित्यविद्यायां श्रवणादिति तात्पर्यम् ।

द्वितीयं पादमारभते । स्मरेति । मन्मथविजयस्तावत् कुमारसंभवो-पाख्याने पुराणादिषु प्रसिद्धः । कालकूटकबलीकरणप्रकारं दर्शयति । मिथ इत्यादि । उद्भवकालानलत्काल इति च हालाहलविशेषणम् । कालानल इवाचरत् कालानील आक्रन्द रोदन उद्धष्ट उद्धोषवेद्य इति । तदुग्रवेगदिशि दिश्युपर्पधो विसर्पदुत्सर्पदसह्यवीर्यं भीताः प्रजा दुद्रुवुरङ्ग सेश्वरा आरक्ष्यमाणाः शरणं सदाशिवम् इत्यादि भागवतादिकथा अनुसंधेया ।

तदिति । हालाहलेत्यर्थः । लीलायितेति । लीलेत्यर्थः । गंगा धारण व्यापारं प्रकटयति देव सा हन्तमित्यादिना । विराम्यहं हि पातालं स्रोतसा गृह्य शंकरम् । इत्यादि रामायणादिषु गंगोपाख्यानमनुसंधेयम् ।

**शिवभक्तिः**—संनिहित एव परमेश्वरः । यदिदानीं ।

श्वेतन्ते हरितो दशापि परितश्चूडाविधुज्योतिषा
नृत्यच्छांकर घण्टिकाघणघणारावैः श्रवः पूर्यते ।
संमर्दोपनमत्सुपर्वमुकुटीकोटीरवाटीरसा-
वुद्दण्डप्रमथौघदण्डपटलीसाटोपमाटीकृते ॥२४॥

*( ततः प्रविशति साम्बशिव )*

**साम्बशिवः**—प्रिये, सिद्धकल्पसंकल्पा भवती । यदयमुपनत एव जीवस्य विद्याविवाहोत्सवः ।

**देवी**—नाथ, भवदनुग्रहः किं न समग्रयिष्यति

*( सर्वे सरभसमुत्थाय प्रणमन्ति )*

---

डिण्डीरफेनम् । अभ्रकल्लोलिनी । गङ्गाजटेति हिमवत्प्रतिमे । रामजटामण्डलगह्वरे इति सा तस्मिन् पतिता पुण्यापुण्ये रुद्रस्य मूर्धनीत्यादि तत्रैवावसेयम् । सम्मितं समं पामरग्रहणेन शिवस्य देवतान्तरसाम्यकथनमन थीयेति गम्यते । "न तत्समश्चाभ्यधिकश्च दृश्यते" इति शिवं प्रस्तुत्य श्रवणात् ।

"ब्रह्मविष्ण्वादिदेवतैः न समं शङ्करं ब्रूयात् शक्तिभिश्चापि पार्वतीम् । स पश्यन्तीशत्वामितरसुरसाधारणमभूत् । स्मरः कर्तव्यात्मा न हि वशिषु पथ्यः परिभवः" इत्यादिवचनाच्चेति बोध्यम् । प्रणुत्या स्तुत्या । प्रपत्या भक्त्या । एतदिति । तिस्रः पुरः इति वक्ष्यमाणनिर्देशः । शताङ्गः रथः । तदङ्गं चक्रम् । आदिपदेन धनुस्तूणीत्यादि गृह्यते । विश्वम्भरा भूमिः । पुष्पवत् सूर्यचन्द्रे ।

**राजा**—(*चित्तशर्मणा सह सप्रश्रयमसकृत्प्रणम्योत्थाय भक्ति-समुत्तेजिताभिर्वाक्प्रवृत्तिभिरभिष्टौति*)

जय जय विजयी भवापार सच्चिद्घनानन्दभूमन्नविद्यातमः सिन्धु निर्मग्न दिनोद्दिधीर्षारसोपात्तकल्याणमूर्ते !, समस्ताभिनन्द्याद्भुतोदार चित्रापदानस्फुरच्चारुकीर्ते ! विखण्डं विखण्डं निजान्येव रुण्डानि तद्धोमतः प्रीणितत्व द्दयालेशलब्धप्रभावाधिकस्तब्ध विष्वग जगन्मण्डली लुण्ठना कुण्ठनाच्चण्डिमोद्दण्ड दोर्दण्ड कण्डूलतागेन्दुकक्रीडितान्दोलित-त्रस्त चण्डीक कैलास तत्कूट किंचित्पदांगुष्ठ विन्यासपाताल निर्मग्न तन्मूललग्नाखुवक्त्रं, ददत्यार्त रक्षः कुलाध्यक्ष दाक्षिण्यभूयः प्रवृत्तानु' म्पार्द्रवच्चित्तवृत्तेति माद्यद्गणोद्यच्चपेटाहतोच्चण्ड मार्तण्डगण्ड त्रुटत्कीर्ण दन्तौघनक्षत्र लोकी भवद्यज्ञ वास्तु द्रुतानु द्रुतातिद्रुतानु द्रुताटोपसंक्षोभतः साध्वसध्वस्त धावत्पतत्क्रन्द दञ्चद्धरिब्रह्मशक्रादि तत्तत्सदस्यामरश्रेणिकं गाढशम्यादृषद्यूप दण्डाहति प्रत्रुटन्निष्ठुरस्त्रुक्स्त्रुवादिच्छटा पर्पट स्फोट वठ्ठापठापोद्भटं ।

---

**जयेति**। द्विरुक्तिरादरे। तत एवाह **विजयीति**। उद्दिधीर्षा उद्धर्तुमिच्छा सैव रसः इच्छा। आम्रवृक्षादिवत् सामान्यविशेषयोः समासः। कल्याणं मङ्गलमयी मूर्तिशालिन्। "अथवानन्तकल्याणगुणैकधन ईश्वरः। शिव इत्युच्यते सिद्धिरिति पौराणिकोक्तेः। यद्वा कल्याणमूर्ते हिरण्मयमूर्ते। अथ एषोऽन्तरादित्य हिरण्मयः पुरुषो दृश्यते इति श्रुतेः अद्भुतः आश्चर्यम्। चित्रं नानाविधम्।

**चित्तवृत्ते इति**। संबोधनम्। एतच्च रामायणादौ व्यक्तम्। अथ दक्षाध्वरवृत्तान्तं दर्शयति। अतिमाद्यमित्यादि। गणा वीरभद्रगणा। शंकरसंहितायां तत्कालसंनिहित गणपुंगवकृतकपोलास्फालनात् पूष्णो दन्तपङ्क्तिगलनं वर्णितम्। पूष्णो दशनलेखां च दीप्तांमुक्तावलीमिव। "जघान

घोरठांकारि गम्भीर कुम्भीसहृध्वस्त सर्पिर्घटौधस्रवद्भूरिसर्पिर्घनौधः समिन्धान विष्वङ्निरुन्धान वैतानवह्न्यर्चिरालीढशालापिनह्यस्फुटद्वंश ठात्कारघोराभंटी भूम निर्वृत्त संवर्त मृद्व्युद्धतिस्तब्धदक्षाध्वरध्वं-सकृत्, वीरभद्रावताराविन्दाक्षवेधश्चिरान्विष्ट नोदृष्ट सांदृष्टिक व्याधपश्वादि निःश्रेयसैश्वर्यविश्राणन स्पष्ट दृष्टाकृते ।

---

अत्र तेषामसुराणां तिस्रः पुरः आसन्नित्यादि तैत्तरीयश्रुत्यर्थोऽनुसंहितः । ' रथः क्षोणी यन्ता शत धृतिरगेन्द्रा धनुरथो । रथाङ्गे चन्द्रार्कैरथचरणपाणिः शर इति'' इति शिवरहस्यादितिहासपुराणान्यपि प्रमाणमिति बोध्यम् ।

मन्दस्मिततेनेति । एतच्च स्कान्दे शङ्करसंहितायामवगन्तव्यम् । पतित्वेनेति । न च रुद्रस्य पाशुपत्यं सोऽब्रवोत् हरं वृणा अहमेव पशूनामधि-पतिरसानीति तस्माद्रुद्रः पशूनामधिपतिरिति श्रुत्या व·वरणलब्धं न स्वाभाविकमिति वाच्यम् । नित्यसिद्धस्यैव तस्यानादौ वेदे तथाभिधानीय-प्रदर्शनम् ।

अत एव शिपुराणे—

स्वनःसिद्धं पतित्वं मे युष्माकं पशुतापि च ।
तदद्य दर्शयिष्यामि पणबन्ध विनोदतः ।।

इत्युक्तम् । नमः सा·····इति । एतच्च नमःशेषित्वं सुदर्शनाचार्यदीक्षित-चरणप्रभृतिभिः निपूणतरमुपपादितं श्रुतिसूक्तमालादिषु ।

मार्कण्डेयचरित्रमाह—सन्निकृष्टमित्यादि । विपत् मरणम् । तम् मार्कण्डेयम् । सः कालः, साशङ्कमिति । शिवभक्तिविषय इति शेषः । कश्चिदिति संप्रतीति भावः । आदित्येत्यनेनाग्निचन्द्रग्रहणम् । न तत्र सूर्यो भातीत्यादि श्रुतिः ।

कृत्स्नमिति । तस्य भासा सर्वमिदं विभातीति श्रुतिः । त्वमेवेति । काकाक्षिन्यायेन प्राक् पश्चादपि संबध्यते । अधिष्ठानव्यतिरेकेणाध्यस्तसत्वा भावात् तस्य चिद्रूपत्वाच्चेति भावः प्रियमिति । प्रेयः पुत्रात् प्रेयो वित्तादिति

स्मरमदतिमिरोष्ण धामन्मिथोदर्पभूयिष्ठ, देवासुरव्रात संक्षुभ्यमाणाब्धिगर्भोद्भव, व्याप्तविध्यण्डचण्डज्वलज्वालजालावलीढाखिलाशामुखाकालकालानलत्कालहालहलार्चिः परिप्लुष्टसाक्रन्दकोलाहलोद्घुष्ट वेधो हरिप्रष्ठ नष्टत्रिलोकी समुज्जीवनायाशु तन्निग्रहारब्ध निर्यत्न जम्बूफलग्रासलीलायित व्यंजितापारमाहात्म्यभूमा···म्भोनिधे देव साहन्तमावेधसो विष्टपादा च पातालतः क्षिप्रमेता जगन्मण्डलीः खण्डडिण्डीरपिण्डानिवावर्तकोटौ समाघूर्णयेयेति दर्पादनल्पार्भटीघोर-

---

श्रुतिः तादृक् सच्चिदानन्दरूपः सत् वर्तमान वर्तसे इति अहमेकः प्रथममासं वर्तामि च भविष्यामि च नान्यः कश्चिन्मत्तो व्यतिरिक्तः । प्राञ्चः प्रत्यञ्चोऽहं दक्षिणां च उदञ्चोऽहमित्यादि श्रुतेः । अनन्थेति । अयमात्मा ब्रह्मेति यत्सादपरोक्षात् तदन्तिके इति श्रुतयः । आरात् समीपे या अविद्येति संबन्धः । तद्यथापि हिरण्यं निधिं निहितमक्षेत्रज्ञा उपर्युपरि संचरन्तो न विन्देयुरित्यादि छान्दोग्ये । सदो दित्वेरेति तत्प्रकाश्यत्वादिति भावः । जगदिति । यतो वा इमानि भूतानि जायन्ते । येन जातानि जीवन्ति । याप्रयन्त्यभिविशन्ति । तद्विजिज्ञासस्व तत् ब्रह्म । जन्माद्यस्य युत इति श्रुतिसूत्रे । तालीति । तालीदलादिवदिति यावत् । उन्मीलनं उद्भवः । द्योतनं प्रकाशनस्थिति इति यावत् । एतत्त्रयमेव ध्वान्तम् ।

तस्य शश्वत् पुनः पुनः स्वमत्तेति स्वसत्ताभिन्नसत्ताशालीत्यर्थः । तच्चेन्द्रजालविशेषणं साङ्कल्पिकमानोरथिक अधिष्ठानेति जगज्जन्मादि कारणत्वं प्रागुक्तम् । प्राक् सर्गरक्षेत्यादिनोक्तमिदानीं तु तदधिष्ठानत्वेन अभिन्ननिमित्तोपादानत्वमुच्यत इति ज्ञेयम् । सूत्रात्मना प्राणात्मनाधिष्ठितस्य स्थितिजन्मादिमोहविशेषणम् । संसत् परिषत् । तदिति । दुग्धाब्धितत्प्रवर्तकत्वात् ज्यायसां श्रेष्ठानां मध्ये । श्रेयसा श्रेष्ठेन । अपीतिपदं प्रागपकृष्य कोट्यापीति योज्यम् ।

माविर्भवन्त्यभ्र कल्लोलिनीनाथ युष्मज्जटामण्डले क्वापि नीवारशूकाग्र संसक्तनीहारलेशः किमालक्ष्यते, पामरारत्वाममेयप्रभावोच्छ्रितं प्राकृतै-र्दैवतैरेकवन्मन्वतेऽहो भवान्नाम विश्राणने कोऽपि चित्तामणिर्नाम संतानको नाम हन्तातिफल्गुप्रबोधानुरूपातिमूढस्तुतिप्रक्रिया सेयमत्य-द्भुते विश्वविद्योतनोद्दामतेजोनिधौ भास्करे कीटखद्योततारोपवद्भाति मे कल्पकप्रष्ठतादृग्विभूत्युत्कटानेककोट्या सहावेक्षणेन क्षणेनैव लोका-ननेकान्विधाय प्रणत्या प्रणुत्या प्रपत्यापि वा जातु यस्ते मतस्तस्य तत्स्वाम्यविश्राणनं ते कियच्चन्द्रचूडामणे ।

---

उज्झित्य उत्तीर्ण इति । अतिक्रान्त इत्यर्थः । तापत्रयम् आध्या-त्मिकादि । अप्रघृष्येति । न वा ओजीयो रुद्र त्वदस्तीति श्रुतिः । भूयसामिति निरतिशय भूमरूपत्वादित्यर्थः । यो वै भूमा तत्सुखमिति श्रुतिः । श्रेयसां श्रेष्ठानां परमं महेश्वरमिति श्रुतिः । श्रेयसां पशुपुत्रादीनामिति वा निरतिशयानन्दरूपत्वादिति भावः ।

सार्थं समूहः । शुकादीति । शुकः कीरः । शुको मुक्त इति प्रसिद्धा-मुनिरपि । द्विज अनेन पक्षिणो ब्राह्मणाश्च । फलं आम्रफलादि । मुक्तिश्च । आगम आगम इति च पदविभागेन वृक्षा वेदान्ताश्च । आतपमिति निस्तपस्क इत्यर्थः कोण इति । पदोऽस्य विश्वा भूतानीति स्वया स्वीयया । अनन्ययांत शक्तिशक्तिमतोरभेदादिति प्रागुक्तम् । देवात्मशक्तिं स्वगुणैर्निगूढामिति श्रुतवात्मशक्ति आत्म भूतां शक्तिमित्यर्थादित्यपि प्रमाणं बोध्यम् ।

प्रसादेति । अत्र प्रसाद इति चित्तस्य अत्यन्तनैर्मल्येन अखण्डाकार-वृत्युन्मुखतारूपोऽवस्थाविशेष उच्यते । निदिध्यासनेति तु अहं प्रत्ययप्रवाहः तदनन्तरमेव चित्तप्रसादात् तस्य पुरोहितत्वं बोध्यम् ।

पुरः अग्रे हितस्य निहितस्येति तदर्थः । इदञ्च कल्याणेषु पुरोहितेन मंगलाशीर्वचनं श्लोकैः कर्तव्यमिति संप्रदायानुसारेण बोध्यम् । धर्मैरिति ।

सकलविबुधदुर्जयैतज्जये जातु केनापि रूपेण किंचिद्यशोऽहं लभेयेति लोभाच्छतांगं तदंगं शरः सूत इत्यादि यत्किंचिदायोधनांगत्वमालम्ब्य संनद्धहृष्टेषु विश्वंभरापुष्पवच्चौरिवेधःपुरोगेषु जाग्रत्सु देवेषु नैडालरोचिःसनाथेन मन्दस्मितेनैव तिस्रः पुरो भस्मसात्कृत्य, दैत्यान्विनिर्जित्य, दृप्तान्मनुष्यान्पशूकृत्य विष्वक्पशूनां पतित्वेन शश्वन्नमः स्वाम्यतः संभृतापारविश्वाधिपत्योन्नते संनिकृष्टं निजस्यायुषोऽन्तं विदित्वा विपद्विघ्नतः प्राग्झटित्येव पूजासमाप्त्याशयारब्धपूजे मृकण्डोस्तनूजे, लुठत्स्वग्रतो दैन्यकारुण्यभूयिष्ठमाक्रन्दने-

---

कर्मणां चित्तशुद्धावेव यज्ञादिवाक्येन विनियोगादिति भावः। विद्या वृत्तीद्धो बोध इत्यर्थः। "नायमात्मा प्रवचनेन लभ्यो न मेधया न बहुना श्रुतेन। यमेवैष वृणुते तेन लभ्यस्तस्यैष आत्मा वृणुते, तनूं स्वाम् इति श्रुतिः। **यद्गर्भमिति**। प्रणवमात्रा त्रयस्याकारोकारमकाररूपस्य ऋगादिवेदत्रयात्मकत्वेनोपनिषत्सु श्रवणादिति भावः। हरेरिवेत्युपमानिदेशस्तु, यशोदया कृष्णस्योदरे जगत्त्रयस्य दृष्टत्वेन पौराणिककथानुरोधादिति। शक्तिशक्तिमतोरभेदादिति वा बोध्यम्। **अक्षरमिति**। यद्यप्यक्षरं न क्षरं विद्यादश्नोतेर्वा तदक्षरमिति वैय्याकरणोक्तरीत्या विनाशरहितत्वेन व्याप्तत्वेन वाक्षरत्वमकारादिवर्णत्रयसमुदायरूपस्य प्रणवस्य न संभवति समुदायस्यापि नित्यत्वादव्यापकत्वाच्च।

तथापि—चतुर्विंशत्यक्षरा गायत्री ओमित्येतदक्षरमुद्गीथमुपासीत' ओमित्येकाक्षरं ब्रह्म इत्यादि वैदिकप्रयोगबाहुल्यादक्षरशब्दस्य प्रणवे निरूढं लक्षणेति तान्त्रिकव्यवहारमभिप्रेत्य एव मुक्तमिति मन्तव्यम्।

**परेति**। योगशास्त्रे ईश्वरं प्रस्तुत्य तस्य वाचकः प्रणव इति सूत्रणात् प्रणवो वाचकस्तस्य। शिवो वा प्रणवो ह्येष प्रणवो वा शिवः स्मृतः। वाच्यवाचकयोरैक्यं यः पश्यति स पश्यति॥ इति शिवपुराणवचनाच्च परमात्मनामत्वमवसेमम्।

बन्धुषु, स्वाधिकारावलेपेन कालेऽथ काले तमाकर्षति क्रोधतो वामपादाभिहत्या स विध्वंसितो मेषविध्वंसमेतत्प्रहारप्रणादोद्भव द्भक्तवात्सल्य कीर्तेर्दिगन्तप्रयाणोचितप्रोच्चलद्यन्त्र ठात्कारितो नाम तेनान्तकः सर्वतोऽद्यापि साशंकमाहिण्डते तत्समो भक्तवात्सल्यसिन्धुर्नकश्चिन्न भूतो न भावी च किं भूयसा जल्पितेन त्वमेकोऽसि सत्यस्वरूपः त्वदन्यन्मृषैवाखिलं सत्वमत्युत्कटार्कादि तेजस्त्रयीकोटिकोट्यापि नो भास्यसे, भास्यते भानसिन्धो भवद्भानलेशेन कृत्स्नं जगत्, किं च लिप्सापदं वल्लभाद्वल्लभं वस्तु न त्वत्परं, किंचिदिष्टं भवेदात्मकामाय सर्वम्, ह्यतो वस्तु सत्यं त्वमेव प्रकाशः, त्वमेव प्रकाशः, त्वमेव प्रियं च त्वमेवासि तादृक्, त्वमात्मा, पुरःपृष्ठतः, पार्श्वतो भूतसद्भाविकालेषु वा सर्वतः सर्वदा वर्तसे हन्त तिष्ठन्निधावेव कार्पण्यभाग्मन्दभागीव तं त्वामनन्यापरोक्षातिनेदिष्ठमारादपश्यन्नविद्येन्द्रजालप्रसूते निमज्जामि संसारमिथ्यार्णवे ।

---

एतद्रूपतयेति । इत्थं भूतलक्षणा तृतीया । प्रणवस्वरूपज्ञाप्ये नादब्रह्मणीत्यर्थः । इतः प्रणवात् नादब्रह्मणीति । "अर्धमात्राद् परो नाद' इति स्मरणात् मकारात्मकार्धमात्रायाः परतः प्रणवस्यावस्थाविशेषो नादसंज्ञितः तद्रूपे ब्रह्मणीत्यर्थः । पूर्वेति । प्रस्तावनायाः प्राग्रूपकेषु "प्रथमं पूर्वरङ्गः स्यात् ततः प्रस्तावनेति च" इत्युक्तपूर्वरङ्गनाम्नोऽङ्गस्य विधया प्रकारेणेत्यर्थः, तथाचानुपदमेव लप्स्यमानविद्याकार्यप्रपञ्चलयस्य प्रारम्भकोऽयं नादब्रह्मणि प्रपंचलय इत्यर्थः । लीयते एकी भवति । ततः पृथक् निगृह्यते इति भावः । रहितेति । अरातयः शत्रवः । अविद्यादयः । तेषां विततिः समूहः । अदसीयेति अमुष्या इयमदसीया तया संतत्या अखण्डाकारतयेति तात्पर्यम् । "तमेव धीरो विज्ञाय प्रज्ञां कुर्वीत ब्राह्मण' इति श्रुतेराप्रायणमावर्तनीयत्वादिति भावः भवेत्यादि स्पष्टम् ।

निगमशिखरिकूटकोटीसदोदित्वरा प्राकृतोद्दामतेजोनिधे सच्चिदानन्दमूर्ते जगत्सर्गरक्षोपसंहारधौरेय, तालीदलादिस्फुरद्वात-चक्रातिवेगभ्रमद्भूरितेजस्त्रयद्योतिनानाविधैतज्जगन्मण्डलोन्मीलनद्योत-विध्वंसनध्वान्तशश्वत्परावर्तनालात चक्रक्रमालोक लीलाविनोदिन्, प्रमाणौघसिद्धस्वसत्तास सत्ताकसांकल्पिक स्वाप्निक व्यावहारादि नानार्थजालेन्द्र जालोदयावस्थिति ध्वंसनानामधिष्ठान, तत्तत्र सर्वत्र सूत्रात्मनाधिष्ठितापारनैकप्रकारोन्मिषत् क्लेशभूयिष्ठ जन्मादिकृन्मो-हगाढान्धकारौघ निःशेषविध्वंसनोच्चण्ड मध्याह्नमार्तण्ड संसार रोग त्रसद्धन्य योगीन्द्रसंसन्मनोमन्थ निर्मथ्यमानश्रुतिव्रात दुग्धाब्धि सिध्यत्सदानन्दचिच्चन्द्रिकासान्द्र तत्पूर्णचन्द्रोदयाद्वैतसाम्राज्यसिं-हासनाध्यक्ष मन्नाथ केनापि सत्संततिर्जायतां श्रेयसाम्, मामकप्राग्जनुः कोटिकोट्यर्जितेनापि पुण्येन दृष्टोऽसि दिष्ट्या न मामुज्झ्य दीनं, त्वदन्यः शरण्यो न मे पारमस्याधुना त्वामपि प्राप्य तीर्णो न चेत्स्यामहं मे परा का गतिर्दीनबन्धो दयापारसिन्धो भवाम्भोधिनिस्तारधौरंधुरीकर्ण धाराति दुर्वारतापत्रयप्लुष्टसं-

---

सपरितोषमिति । इदं विद्यावाप्तिरूपजीवराजवाञ्छितावाप्ति-निबन्धनादानन्दो नाम संध्यंगम् । तदुक्तं भामहेन—"आनन्दो वाञ्छि-तावाप्तिः । इति । दृष्टिरिति । आत्मा दृश्यते ययेति दृष्टिर्विद्येति बोध्यम् दिष्ट्या दैवात् मुषिता लब्धा । मुषिता निरस्ताः । विमोहाः अविद्या-तत्कार्यरूपाः । "भिद्यते हृदयग्रन्थिः" इत्यादि श्रुतिः । सुप्तेति । आदौ सुप्तस्ततः प्रबुद्ध इत्यर्थः । प्रसादान्निर्मलत्वात् राहोरिति । चन्द्र उपराहो-र्मुखात् प्रमुच्येति । छान्दोग्यम् । शाणवलीढं शाणोत्तेजितम् । शैवलितं मलिनम् । भूयः प्रकामम् अखण्डाकारतयेति यावत् । सुहिता तृप्ता । परिपूर्णेति ।

जीवनोदार धाराधरानादि मोहान्ध्यनष्टामितस्वार्थमादृगूदृगानन्द सिद्धांजनात्मन् नमस्ते नमस्ते समस्तेश्वरायाप्रधृष्यौजसे तेजसे तेजसां तेजसे भूयसां भूयसे प्रेयसां प्रेयसे ।

**साम्बशिवः**—वत्से किमितो विलम्ब्यते ।

**शिवभक्तिः**—नाथ सर्वे वयमितः प्रस्थिताः एव कल्याण मण्डपाधिगमाय ।

**तण्डुः**—इत इतो देवः ।

( *सर्वे कल्याणमण्डपगमनं नाटयन्ति* । )

**शिवः**—हन्त, महासार्थगमनमहोत्साहेनाविदितविप्रकर्षः पदान्तरवदञ्जसैव महानतीतः पन्थाः । ( *पुरो विलोक्य* । )

**शुकादिनानाद्विजघोषघोषितं फलोपनम्रागममण्डलोज्ज्वलम् ।**
**समाधिनामस्फुरदन्तरातपं प्रसन्नमुद्यानमिदं महेशितुः ॥२६॥**

यावदेतदुपसरामः ।

( इति *कल्याणमण्डपमधिगम्य यथोचितमुपविशन्ति* । )

**शिवभक्तिः**—वत्स, भद्रपीठमिदमासनपरिग्रहेणालंक्रियताम् ।

---

परिपूर्णेति । "पूर्णमदः पूर्णमिदं पूर्णात्पूर्णमदुच्यते । पूर्णस्य पूर्णमादाय पूर्णमेवावशिष्यते" इति श्रुतिः । अत्र मुषिता विमोहा इति सुहितेति च परस्परदुःखनिर्गमकथनात् समयो नाम सन्ध्यङ्गम् । समयो दुःखनिर्गम इति तल्लक्षणम् । तदीयमिति । 'क्षीयन्ते चास्य कर्माणि तस्मिन् दृष्टे परावर" इति श्रुतिः । नितान्तेति । निरवशेषनिवृत्तेति हृदयम् । निर्व्यूढमिति । अनेन विद्यायाः स्थिरीकरणात् कृतिर्नाम सन्ध्यंगम् । "कृतिर्लब्धार्थशमनम् इत्युक्तं निबद्धम् ।

( *राजा तथा करोति* )

देवः—प्रस्तूयतामनन्तरकरणीयम् ।

( *नेपथ्ये* )

कोणे यस्य जगन्त्यमूनि जलधेर्डिण्डीरजालोपमं
जन्मस्थेमलयान्भजन्ति सहरिब्रह्मादिमृग्योऽपि सन् ।
लोकस्यानुजिघृक्षया धृतवपुः शक्त्या स्वयानन्यया
स शिलष्टो जगदम्बया पशुपतिः कुर्वीत वां मङ्गलम् ॥२७॥

शिवभक्तिः—( *श्रुत्वा । सहर्षम्* । ) इदं प्रसादनाम्नो निदिध्यासनमहाराजपुरोहितस्य सुलग्नसांनिध्यसूचनमाशीर्वचनम् ।

( *पुनर्नेपथ्ये* )

इयं न लभ्या तपसा न धर्मैर्न मेधया नापि बहुश्रुतेन ।
शिवप्रसादेन तवोपनम्रा विद्या तदेनां भज सावधानः ॥२८॥

शिवभक्तिः—( *श्रुत्वा सहर्षोल्लासम्* । ) संनिहितो मुहूर्तः । प्रवर्ततामातोद्यम् ।

---

परममिति । निरतिशयमित्यर्थः । "एषास्य परमो लोक" इति श्रुतिः । ईदृगिति । प्रत्यक्षनिर्देशः । स्वरूपसुखस्य शब्देनैवमिति बोधयितुमशक्यत्वात् । अत एव "यतो वाचो निवर्तन्ते अप्राप्य मनसा सह । आनन्दं ब्रह्मणो विद्वान् न बिभेति कुतश्चन" इति श्रुतिः । ममेति । भेदारोपेण बोध्यम् । भवदिति । चैतन्यस्यान्तः करणतादात्म्येनाध्यस्तत्वादिति भावः । अत एव भाष्यम्--"अहमिति प्रथमोऽध्यासः ।" इति । सत्यानृते मिथुनीकृत्याहमिदं ममेति नैसर्गिकोऽयं लोकव्यवहारः" इति च ।

राजा—

यद्गर्भं जठरं हरेरिव जगन्त्यध्यासते वृत्तय-
स्तिस्रस्त्रय्यपि तादृगोमिति परब्रह्माभिधानं परम्।
एतद्रूपतया निरन्तरमितस्तौर्यत्रिकोदञ्चिते
नादब्रह्मणि पूर्वरङ्गविधया कृत्स्नं जगल्लीयते ॥२९॥

*( ततो निदिध्यासनमहाराजः सह विद्यया प्रविश्य । )*

रहिताराततिविततत्या राजन्नदसीय...संतत्या ।
भव परमानन्दघनो भवसागरपारविश्रान्तः ॥३०॥

*( इति विद्यां जीवराजाय प्रयच्छति । )*

जीवराजः—*( विद्यां पाणौ गृहीत्वा सपरितोषम् । )*

दृष्टिर्ममासि दयिते सुकृतातिरेका-
द्दिष्ट्याधुनापि मिषिता मुषिता विमोहाः ।
सुप्तप्रबुद्ध इव सुभ्रु तव प्रसादा-
दात्मा किलायमहमित्यवधारयामि ॥३१॥

---

मदिति । स्वरूपमात्रपरिशेषणादिति हृदयम् । सुखी सुखम् । विवेकाद्याः शमदमादयः । विरतिः विरक्तिः । अनितरतया अभेदेन । तदेवाह- मित्यादि । एवं बहुमानोक्त्या "मानाद्याप्तिश्च भाषणम्" इत्युक्तं भाषा- नामाङ्गं निबद्धम् । क्वाहमित्यादि । अत्र द्वयो-अननुरूपयोः संघटनवर्णनात् । क्वेयं शिरीषमृद्वंगी क्व तादृङ्मदनज्वरः" इत्यादाविव विषमालंकारः । अव्यवहित भिन्नसात्विक तीव्रतमशिवभक्तौ सत्याम् स्वरूपसुखावाप्ति- रूपमुक्तौ विलम्बाभावादिति भावः मन्यत इति । तथापीति शेषः । जाता मन्य इत्युत्प्रेक्षा । ततः किमन्यत् ब्रुवे इति वाक्यान्तरं लोकरीत्येति बोध्यम् ।

**विद्या**—

ग्रस्तं विमुक्तमिव शारदचन्द्रबिम्बं
शाणावलीढमिव शैवलितं च रत्नम् ।
भूयः प्रपद्य पुरुषोत्तम वल्लभं त्वा-
मात्मानमस्मि सहिता परिपूरितेव ॥३२॥

**चित्तशर्मा**—(*पुरोऽवलोक्य । सविस्मयम् । राजानं प्रति ।*) अहो पारेगिराममुष्याः प्रभावः । यदधुना

शतकोटिकोटिजननेषु भूरिशः
सुखदुःखभोगपरिपाकसाधनम् ।
यदविद्ययातिचिरकालसंचितं
तदियं प्रदीपयति कर्म वल्वजम् ॥३३॥

*तदिदमवलोक्य नितान्तपरिक्लिष्टा यथागतमविद्या सपरिवारा परावृत्य गच्छति ।* )

**राजा**—(*विलोक्य । सहर्षम् । चित्तशर्माणं प्रति ।*)

त्वयेदं निर्व्यूढं ननु परममीदृङ्मम सुखं
ब्रुवे किं कुर्वे किं भवदुचितमेवं व्यवसितम् ।
अविद्याशक्त्याहं भवदनितरो ह्यस्मि सुचिरा-
दितो विद्याशक्त्या मदनितरभूतो भव सुखी ॥३४॥

---

प्रथमाङ्क विष्कम्भे शिवयोराज्ञयैव शिवभक्तेः जीवराजबन्धविमोचन-प्रवृत्तेरुपपादनात् निरुपाधिकृपानिधिः शिव एव तथा दधत इति किमिहाश्चर्यमिति भावः । अत्र गंगाकीकट कीटतापशमनीति शिव भक्तिकृतजीवराज दुःखपरिहारलक्षणकार्याविष्करणात् "पूर्वभावः कार्यदृष्टिः" इत्युक्तः पूर्वभावो निबद्धः ।

( पुरतो निर्दिश्य । सप्रश्रयम् । )

विवेकाद्या एते विरतिरियमेषा विविदिषा
निवृत्तिः सा सर्वैरनितरतया साधितमिदम् ।
अहं कश्चित्ते केचिदिति सति भेदे खलु मिथो
भवेदायस्तानामुचितमुपचारोक्तिरचना ॥३५॥

( शिवभक्तिं प्रणम्य । सविनयादरम् । )

क्वाहं मोहमहान्धकारजलधौ गाढं निमग्नश्चिरा-
दीदृक्शाश्वतचित्सुखान्यवहिता क्वेयं भवत्संगतिः ।
मन्ये विश्वगुरोर्मृडस्य मुकुटालंकारमालायिता
गङ्गा कीकटकीटतापशमनी जाता किमन्यद्भुवे ॥३६॥

( ततः सहैव भक्त्या साम्बशिवमुपसृत्य । )

दुग्धार्णवे दुग्धलवः प्रविष्टो यथा तथाहं त्वमभूवमेव ।
भेदावभासेन तथापि किंचिदौपाधिकेन प्रणमाम्यहं त्वाम् ॥३७॥

---

दुग्धार्णवे इति । समुद्रनिपतितो जलबिन्दुः यथा समुद्र एव एवं अविद्योपाधिमहिम्ना त्वमित्यहमिति च शिवजीवभेदेन स्थितोऽहमिदानीं उपाधिविलयात् तदेकोऽवशिष्टः शिवः केवलोऽहमिति भाष्यकार वचनानुसारेण । अहं त्वमेव जात इति यद्यपि भेदगर्भप्रणामप्रसक्तिः तथापि यावत् प्रारब्धं जीवन्मुक्तस्यापि लेशतः क्षालितपलाण्डु भाण्डन्यायेन दग्धपटन्यायेन वा मायावृत्तेः "यावज्जीवं त्रयो वन्द्या वेदान्तगुरुरीश्वरा" इति न्यायेन त्वामहं प्रणमामीति भावः ।

इमाः सोम्य नद्यः पुरस्तात्प्राच्यः स्पन्दन्ते पश्चात्प्रतीच्यस्ताः समुद्रं समुद्रमेवापियन्ति समुद्र एव भवति । ता यथा तत्र न विवेकं लभन्ते ।

( *प्रणम्योत्थाय बद्धाञ्जलिः शिवं प्रति ।* )

विलीय स्वाविद्याघनयवनिकायामथ बह-
न्विचित्रं नैपथ्यं नटसि शिव नानात्मकतया ।
स्वयं जाग्रत्पश्यस्यपि च परमानन्दभरितो
जयत्यत्याश्चर्यं जगदिति भवन्नाटकमिदम् ॥३८॥

**शिवभक्तिः**—( *परमेश्वरीं प्रति ।* ) भगवति, निरुपाधिकया भवदनुकम्पया तदेवमयं कृतार्थो जीवराजः ।

**देवी**—( *सप्रसादस्मितम् ।* ) वत्स, किं ते भूयः प्रियमुपहरामि ।

**जीव**—अम्ब, किमितोऽपि परमवशिष्यते । तथापीदमस्तु ।

---

इयमहमस्मीति यथा नद्यः स्यन्दमाना समुद्रमागच्छन्ति नामरूपे विहाय तथा विद्वान्नामरूपाद्विमुक्तः परात्परं पुरुषमुपैति दिव्यमित्यादि श्रुत्यनुसारेणात्र श्लोके यथा दुग्धलवः दुग्धाम्बुधौ प्रविष्टः दुग्धाम्बुधिरेव नान्यः तथा त्वयि प्रविष्टोऽहं त्वमेवाभूवमिति विवक्षितोपमेयोपमानभावे दुग्धार्णव इति त्वयीति चाध्याहृत्य योज्यम् ।

इदं चध्याहारद्वयं अर्थसिद्धमिति न कण्ठतः पठितम् यद्वा यथा दुग्धार्णवे दुग्धलवः प्रविष्टः तथाहं त्वयि प्रविष्ट इति त्वयीत्येवार्थसिद्धपदमध्याहृत्य.........मिति नोपमानाध्याहारक्लेशः । उदाहृतश्रुत्यनुसारेण तु लब्धमेकत्वमनुभव......त्वम भूवमेवेति । प्रविष्ट इत्यस्य एकीभूत इत्यर्थः । ग्रहे देवतादेरिव मु......प्रवेशसंभवात् उदाहृतश्रुतिगतोपमानोपमेयभावानुरोधित्वाच्च ।

अस्तु स्वस्ति जगत्त्रयाय जगतीं रक्षन्तु भूमीभुजो
धर्मेणैव यथा भवन्तु सुखिनः सर्वेऽपि गोब्राह्मणाः ।
पर्जन्यान्नमखक्रमेण　　जगतश्चक्रं　　तदावर्ततां
विद्वांसो विजयीभवन्तु भगवद्भक्त्या त्रयी वर्धताम् ॥३९॥

इति

( *निष्क्रान्ताः सर्वे* । )

इति सप्तमोऽङ्कः

---

तथा च अहं त्वमिति सामानाधिकरण्येन तत्वमसीत्यादिमहावाक्येष्विव माधुर्यैक्यरसत्वेनानन्दहेतुत्वं तथै······स्वरूपस्य ब्रह्मणः । एषह्येवानन्दयतीति श्रुतिसिद्धसकलजगदानन्दहेतुत्वेन आनन्द········ प्रत्यायनार्थम् । एतस्यैवानन्दस्यान्यानि भूतानि मात्रामुपजीवन्तीति श्रुतेः ।

अन्तर्धायस्वेति । स्वविषयत्वं स्वाश्रयत्वं वा स्वीयत्वमविद्यायाः संवाद्य यवनिका······तस्यामित्यर्थः ।

अथ अनन्तरं विचित्रं एकत्र इव मनुष्यादि ना······तन्मात्ररूपं नैपुण्यं देवता······तत्तद्रूपेण ।

नट सामाजिकादि भावेन अवस्थानात्······बद्धनाटक······विद्यया अद्भुतप्राप्तिनिबन्धनादुपगूहनं नामांगम् ।

तदेवमयं कृतार्थः इत्यनेन उपसंहारादुपसंहारो नामांगम् । जगत्त्रयायेति । मम शुभशंसनं इति तल्लक्षणम् । जगतीं भूमिम् ।

इति स्वोपज्ञाटीका समाप्ता

# श्लोकानुक्रमणिका

स



ह



क्ष